अनाविलधियामन्तश्चिन्तामणिरिव स्फुरन् ।
दिशस्यभिमतं सर्वमतिरस्कार्यदीधितिः ॥ ५२

संसारमरुकान्तारे परिश्रान्तस्य देहिनः ।
त्वद्भक्त्यमृतवाहिन्यामादिष्टमवगाहनम् ॥ ५३

दुरितोदन्वदावर्ते घूर्णमानस्य दुःख्यतः ।
समग्रगुणसम्पन्नः तारकस्त्वं प्लवो महान् ॥ ५४

अपरिच्छिद्यमानस्य देशकालादिभिस्तव ।
निदर्शनं त्वमेवैकस्त्वदन्यव्यतिरेकतः ॥ ५५

---

**अनाविलेति** ॥ अतिरस्कार्यदीधितिः तेजोन्तरैरनभिभवनीयप्रकाशः त्वं अनाविलधियां चिन्ताविरोधिव्यापारैः अकलुषधियां अन्तः हृदये स्फुरन् प्रकाशमानः निरन्तरचिन्ताविषयीकृतस्सन् । अभिमतं ईप्सितं सर्वं दिशसि प्रयच्छसि चिन्तामणिरिव सोऽपि दिव्यरत्नतया तेजोन्तरैरभिभवनीयप्रकाशः चिन्तितोभिमतमर्थन्ददाति ॥ ५२ ॥

**संसारेति** ॥ संसार एव मरुः निर्जलप्रदेशः सुखरहितत्वेन नीरसत्वात् तस्य कान्तारं दुर्गमं तत्र परिश्रान्तस्य गतागताभ्यां खिन्नस्य देहिनः शरीरिणः त्वद्भक्तिरेव अमृतवाहिनी सुधानदी तस्यां अवगाहनं आदिष्टं गतागतश्रमहरत्वेन उपदिष्टम् । 'भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ॥' इत्यादावित्यर्थः ॥ ५३ ॥

**दुरितेति** ॥ दुरितमेव उदन्वान् समुद्रः तस्य आवर्तं जलभ्रमे आवर्तइत्युपचाराद्दुरितपरिपाकः तस्मिन् घूर्णमानस्य परिभ्राम्यतः दुःख्यतः क्लिश्यतः देहिनः शरणागतस्य इति भावः । समग्राः अपरिच्छिन्नाः गुणाः ज्ञानशक्त्यादय एव गुणास्सूत्राणि तैस्सम्पन्नः समृद्धः त्वमेव महान् प्लवः उडुपं तारकस्तारयिता । पूर्वत्र भक्तेः मुक्त्युपायत्वमुक्तं इह तु प्रपत्तेरिति भेदः ॥ ५४ ॥

**अपरीति** ॥ देशकालादिभिः विभुत्वात् देशेन नित्यत्वात् कालेन सर्वात्मकत्वात् वस्तुना च अपरिच्छिद्यमानस्य तव त्वं एकएव निदर्शनं दृष्टान्तः

अकर्तुमखिलं कर्तुमन्यथाकर्तुमप्यलम् ।
सङ्कल्पसचिवः काले शक्तिलेशस्सतावकः ॥ ५६

यन्मूलमखिलं कार्यं यदमूलमधीमहे ।
लक्ष्यं तदसि योगानां लक्ष्मीकौस्तुभलक्षणम् ॥ ५७

त्रिवर्गमपवर्गं वा प्रतिलब्धुं प्रयस्यताम् ।
प्रलयेष्वपि दीर्घायुः प्रतिभूस्त्वदनुग्रहः ॥ ५८

---

त्वदन्यत् व्यापित्वादिना प्रसिद्धं गगनादि व्यतिरेकतः निदर्शनमित्यनुषङ्गः । गगनादिवद्देशपरिच्छिन्नो न भवतीत्यादिक्रमेण व्यतिरेकदृष्टान्तो भवतीत्यर्थः ॥ ५५ ॥

अकर्तुमिति ॥ अखिलं प्रपञ्चं काले तत्तदुचितसमये अकर्तुं कर्तुं अन्यथाकर्तुमपि प्रलयेष्वकर्तुं सर्गादिषु कर्तुं मन्वन्तरभेदेषु पूर्वेन्द्राद्यधिकारं विनिवर्त्य इन्द्रान्तराणि स्थापनक्रमेणान्यथाकर्तुञ्च सङ्कल्पसचिवः त्वत्सङ्कल्पसहायः तावकश्शक्तिलेशः त्वदीयशक्तिलेशरूपः सकालएव अलं पर्याप्तः त्वच्छक्तिलेशएव जगद्व्यापाराय पर्याप्तः तव परिपूर्णशक्तिः कथं लक्ष्यत इति भावः ॥ ५६ ॥

यादात ॥ अखिलं वियदादि कार्यं यन्मूलं यत्कारणकम् । यत् अमूलं अकारणकं अधीमहे 'न चास्य कश्चिज्जनिता न चाधिपः' इत्याद्युपनिषत्सु विविवत् पठामः तत् लक्ष्मीः कौस्तुभाख्यो मणिश्च लक्षणं चिह्नं यस्य तथाभूतम् । योगानां दहरोपासनादिपरविद्यानां लक्ष्यं उद्देश्यं परं ब्रह्मासि ॥ ५७ ॥

त्रीति ॥ त्रयाणां धर्मार्थकामानां वर्गस्तम् । अपवर्गं मोक्षं वा प्रतिलब्धुं प्राप्तुं प्रयस्यतां प्रयतमानानां त्वदनुग्रहः तव प्रसादः प्रलयेष्वपि दीर्घायुः प्रतिभूः लग्नकः यथा वृद्ध्याजीवाः प्रतिभुवं विश्वस्य वृद्ध्यर्थं धनं प्रयुञ्जते तथा सन्तः त्वत्प्रसादमेव कल्पान्तरेष्वपि फलप्रदं विश्वस्य त्रिवर्गापवर्गार्थानि कर्माणि अनुतिष्ठन्ति ॥ ५८ ॥

यदेकमक्षरं ब्रह्म सर्वाम्नायसमन्वितम् ।
तारकं सर्वजन्तूनां तत्त्वं तव च वाचकम् ॥ ५९

त्वदालम्बितहस्तानां भवादुन्मज्जतां सताम् ।
मज्जतः पापजातस्य नास्ति हस्तावलम्बनम् ॥ ६०

अनन्यरक्षाव्रतिनं चातकव्रतचारिणः ।
भवन्तमवलम्बन्ते निरालम्बनभावनम् ॥ ६१

---

यदिति ॥ सर्वाम्नायसमन्वितं सर्वेषु वेदेषु आद्यन्तयोः समन्वितम् । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा' इति स्मृतेः । सर्वजन्तूनां तारकं भवार्णवतरणोपायभूतं यत् एकं अक्षरं ब्रह्म एकाक्षररूपं शब्दब्रह्म ओमित्येकाक्षरं ब्रह्मेति प्रसिद्धम् । तत् त्वं तव वाचकं अभिधानञ्च । ओमिति ब्रह्म । 'ओन्तत्स-दिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' । इत्यादिषु प्रणवरूपतया प्रणववाच्यतया च वर्णितं परब्रह्म त्वमेवेत्यर्थः ॥ ५९ ॥

त्वदिति ॥ त्वया आलम्बितहस्तानां उद्धरणाय गृहीतहस्तानाम् । अत एव भवात् संसारकूपात् उन्मज्जतां सतां ब्रह्मविदां 'अस्ति ब्रह्मेति चेद्वेद सन्त-मेनन्ततो विदुः' इति श्रुतेः । मज्जतः पापजातस्य पापसमूहस्य हस्तावलम्बनं नास्ति अतएव सहोन्मज्जनं नास्तीत्यर्थः ॥ ६० ॥

अनन्येति ॥ अनन्याः एकान्तिनः तेषां रक्षैव व्रतं तदस्यास्तीति अनन्यरक्षाव्रती तम् । भवन्तं चातकाः जलधरैकान्तिनश्शकुन्ताः तेषां व्रतं एकान्तित्वं चरितुं शीलमेषामिति तथोक्ताः त्वदेकनियताः । निरालम्बना भक्तियोगाद्युपायान्तरालम्बनरहिता भावना मनोव्यापारो यस्मिन्कर्मणि तद्यथा तथा उपायान्तरनिराशमितियावत् । अवलम्बन्ते प्रपद्यन्ते ॥ उपायान्तरनैराश्यरूपस्याकिञ्चन्यस्य प्रपदनाधिकारिविशेषणत्वान्निरालम्बनभावनमित्युक्तम् ॥ ६१ ॥

अनिदम्पूर्वनिद्राणामनस्तमयभानुमान् ।
आपादयसि पुंसां त्वमपुनस्स्वापजागरम् ॥ ६२

त्वदेकशरणानां त्वं शरणागतजीवनः ।
विपदन्नः क्षिप क्षिप्रं तमिस्रामिव भास्करः ॥ ६३

सति सूर्ये समुद्यन्तः प्रतिसूर्या इवासुराः ।
जगद्बाधाय जायन्ते जहि तान्स्वेन तेजसा ॥ ६४

स दैत्यहत्यामिच्छद्भिस्सुरैरेवमभिष्टुतः ।
अनन्यदृश्यस्सहसा दयया दर्शनं ददौ ॥ ६५

---

अनिदमिति ॥ अनिदंपूर्वा अनादिकालप्रवृत्ता निद्रा संसृतिर्येषा-न्तेषां पुंसां अनस्तमयभानुमान् अस्तमयरहितसूर्यः त्वं अपुनस्स्वापजागरं पुनरावृत्तिरहितं अपवर्गं आपादयसि । यथोद्यन् भास्वान्निद्रितान् प्रबोधयति । एवं त्वं हृदये स्फुरन् संसारिणो मोचयसीत्यर्थः ॥ ६२ ॥

त्वदेकेति ॥ शरणागतान् जीवयतीति शरणागतजीवनः त्राता त्वम् । एकः शरणं रक्षिता येषान्तेषां नः अस्माकं विपदं तमिस्रां अन्धकारं भास्करइव क्षिप्रं शीघ्रं क्षिप ॥ ६३ ॥

सतीति ॥ सूर्ये सति विद्यमाने समुद्यन्तः प्रतिसूर्या इव असुराः कंसादिरूपिणः जगतां बाधाय उपद्रवाय जायन्ते सम्पद्यन्ते प्रतिसूर्या अप्यौत्पातिकत्वादुपद्रवकरा भवन्ति स्वेन तेजसा प्रभावेण सूर्यपक्षे ज्योतिषा तान् जहि संहर ॥ ६४ ॥

स इति ॥ दैत्यहत्यां असुराणां हननं इच्छद्भिः सुरैः एवमुक्तप्रकारेण अभिष्टुतः अनन्यानां एकान्तिनां दृश्यः स पुरुषोत्तमः सहसा अतर्कितं दयया दर्शनं ददौ । तेषां पुरस्तादाविर्भूत इत्यर्थः ॥ ६५ ॥

ततस्तं ददृशुर्देवाश्शेषपर्यङ्कमास्थितम् ।
अधिरूढशरन्मेघमन्यादृशमिवाम्बुदम् ॥ ६६

पत्न्या सह निषेदुष्या पद्मलक्षणलक्ष्यया ।
स्वेच्छयैव शरीरिण्या सूचितैश्वर्यसम्पदम् ॥ ६७

सुकुमारसुखस्पर्शसुगन्धिभिरलङ्कृतम् ।
स्वविग्रहगुणारामप्रसूनैरिव भूषणैः ॥ ६८

आरञ्जितजगन्नेत्रैरन्योन्यपरिकर्मितैः ।
अङ्गैरमितसौन्दर्यैरनुकल्पितभूषणम् ॥ ६९

---

**ततइति** ॥ ततः तदाविर्भावानन्तरं देवाः ब्रह्मादयः शेषएव पर्यङ्को मञ्चः तमास्थितं अधिरूढं (तिष्ठतेरुपसर्गभेदादर्थभेदात्सकर्मता) अतएव अधिरूढशरन्मेघं अन्यादृशं विलक्षणं लोकोत्तरं अम्बुदं अम्बुवाहमिव स्थितं तं ददृशुः॥६६॥

**पत्न्येति** ॥ सह निषेदुष्या शेषपर्यङ्के स्वेन साकं निषण्णया पद्ममेव लक्षणं चिह्नं तेन लक्ष्यया दृश्यया पद्महस्तया स्वेच्छयैव कर्मवश्यतां विना स्वेच्छामात्रेण शरीरिण्या पत्न्या श्रीमहालक्ष्म्या सूचिता ऐश्वर्यसम्पत् परभावरूपैश्वर्यप्रकर्षः यस्य तम् । इतआरभ्य श्लोकसप्तकस्य ददृशुरिति पूर्वेण सम्बन्धः । 'ह्रीश्च ते लक्ष्मीश्च पत्न्या' विति परं ब्रह्माधिकृत्यश्रवणात् लक्ष्मीपतित्वं परभावलिङ्गमिति भावः ॥ ६७ ॥

**सुकुमारेति** ॥ सुकुमाराणि कोमलानि सुखः सुखकरः स्पर्शः येषामिति सुखस्पर्शानि तत्तत्कालसुखदायिस्पर्शविशेषयुक्तानि शोभनो गन्धो येषामिति सुगन्धीनि तैः । स्वविग्रहः स्वशरीरमेव गुणानां (आश्रयः) आरामः उपवनं तस्य प्रसूनैः पुष्पैरिव स्थितैः भूषणैः दिव्याभरणैरलंकृतम् ॥ ६८ ॥

**आरञ्जितेति** ॥ आरञ्जितजगन्नेत्रैः अनुरक्तीकृतलोकलोचनैः अन्योन्यपरिकर्मितैः परस्परेण सञ्जातप्रसाधनैः अमितसौन्दर्यैः अपरिमिताभिरूप्यैः अङ्गैः अनुकल्पितभूषणं अनुरूपकल्पीकृताभरणं आभरणेभ्योऽप्यङ्गानामेव परस्परमतिशयितशोभावहत्वादिति भावः ॥ ६९ ॥

उत्तेजितजयोत्साहमायुधैरनघोद्यमैः ।
शौर्यविक्रमशक्त्याद्यैः सहजैः स्वगुणैरिव ॥ ७०
स्वकान्तिजलधेरन्तस्सिद्धसंहननं स्वतः ।
महिम्ना जातवैचित्र्यं महानीलमिवोदितम् ॥ ७१
श्रुतिरूपेण वाहेन शेषकङ्कणशोभिना ।
स्वाङ्घ्रिसौरभदिग्धेन दत्तसङ्ग्रामदोहलम् ॥ ७२
स्ववेत्रस्पन्दनिष्पन्दनेतव्येन निवेदितम् ।
भक्तिनम्रेण सेनान्या प्रतिशृण्वन्तमिङ्गितैः ॥ ७३

---

उत्तेजितेति ॥ अनघोद्यमैः अवितथोद्योगैः शौर्यं बलं विक्रमः शौर्यस्य विषयेषु प्रयोगः शक्तिस्सामर्थ्यं तदाद्यैः तत्प्रभृतिभिः सहजैः स्वभावसिद्धैः स्वगुणैः आत्मीयगुणैरिव स्थितैः आयुधैः सुदर्शनादिभिः उत्तेजितजयोत्साहं आयुधदर्शनात् उत्कटीभूतासुरजयोद्योगमित्यर्थः ॥ ७० ॥

स्वेति ॥ स्वकान्तिरेव जलधिः तस्य अन्तः मध्ये स्वतःसिद्धसंहननं स्वतएव कर्माद्यनधीनतया सम्पन्नवपुषं महिम्ना माहात्म्येन कस्यचिन्निर्माणं विना स्वतएव जातवैचित्र्यं सम्पन्नाकारवैचित्र्यं । निर्माणे तादृशाभिरूप्यं न सम्भवतीति भावः । उदितं उद्भूतं महानीलं इन्द्रनीलमणिविशेषमिव स्थितम् । सोऽपि जलमध्ये सिध्यतीति भावः । 'सिंहलस्याकरे जाता महानीला इति स्मृताः ।' इति रत्नशास्त्रम् ॥ ७१ ॥

श्रुतीति ॥ शेषरूपेण कङ्कणेन शोभत इति शेषकङ्कणशोभी तेन । स्वाङ्घ्रिसौरभदिग्धेन वहनकालसंक्रान्तभगवच्चरणामोदरूषितेन श्रुतिरूपेण वेदरूपेण वाहेन सुपर्णेन 'सुपर्णोसि गरुत्मान् त्रिवृत्तेशिरः' इत्यादिना तस्य वेदमयत्वश्रुतेः । दत्तसङ्ग्रामदोहलं दत्तयुद्धाभिलाषं गरुडदर्शनादेव सञ्जातदैत्ययुद्धाभिलाषमित्यर्थः ॥

स्वेति ॥ स्ववेत्रस्य करधृतस्य स्पन्देन चलनेन निष्पन्दा निश्चला नेतव्या देवसमीपप्रापणीया यस्य तेन । देवाय तत्तत्कार्यन्निवेदयितुं तत्समीपन्नीयमानान्

अनपायं तमादित्यमक्षयं तारकाधिपम् ।
अपारममृताम्भोधिममन्यन्त दिवौकसः ॥ ७४

अभयोदारहस्ताग्रमनघस्वागतस्मितम् ।
अवेक्ष्य विबुधा देवमलभन्त दृशोः फलम् ॥ ७५

तस्मै विज्ञापयामासुर्विदितार्थाय नाकिनः ।
निहताशेषदैत्याय निदानं स्वागतेः पुनः ॥ ७६

---

अहमहमिकया पर्यापततः तद्धारणायाज्ञासामर्थ्यात् स्वनेत्रचलनमात्रेण निश्चली- कुर्वतेत्यर्थः । नम्रेण भक्त्या प्रह्वेण सेनान्या विष्वक्सेनेन निवेदितं विज्ञापितं प्रयोजनं इङ्गितैः भ्रूसंज्ञादिभिः प्रतिशृण्वन्तं दास्यामीति प्रतिजानन्तम् ॥ ७३ ॥

अनपायमिति ॥ दिवौकसः तं भगवन्तं अनपायं आदित्यं अस्तमय- रहितं सूर्यं अक्षयन्तारकाधिपं क्षयरहितञ्चन्द्रं अपारं अमृताम्भोधिं पाररहितं सुधासमुद्रञ्च अमन्यन्त । देवस्यातिशयिततेजःप्रसादं आभिरूप्येण परमानन्द- रूपतया च आस्वादनीयताञ्च पश्यन्तो नित्योदितत्वनित्यैकरूपत्वापरिच्छिन्नत्वा- निचादित्यादिवैलक्षण्याणि विमृशन्तस्त्रिदशाः अस्तमयरहितोऽयं कश्चिदन्यादृशादित्य इत्यादिक्रमेण मेनिर इत्यर्थः ॥ ७४ ॥

अभयेति ॥ विबुधा देवाः अभयेन अभयमुद्रया उदारं ख्यातं हस्ताग्रं यस्य । अनघं अघविरोधि दर्शनमात्रेण सकलदुःखापहारि स्वागतस्मितं कुशल- प्रश्नरूपमन्दस्मितं यस्य । तं देवं अवेक्ष्य दृशोः फलमलभन्त । बहुष्वपि नयनेषु दृशोरिति द्विवचनजात्यभिप्रायम् ॥ ७५ ॥

तस्मा इति ॥ नाकिनः देवाः निहताशेषदैत्याय निहतकालनेमिप्रमुखा- खिलदैत्याय विदितार्थाय निहता दैत्याः भूमावुत्पन्ना बाधन्ते पुनस्तदर्थमागता इति स्वयमेव विदितस्वागमनप्रयोजनाय तस्मै पुरुषोत्तमाय स्वागतेः स्वागमनस्य निदानं मूलं विज्ञापयामासुः ॥ ७६ ॥

तइमे क्षत्रिया भूत्वा क्षोभयन्ति क्षमामिमाम् ।
तव तेजसि यैर्नाथ दनुजैश्शलभायितम् ॥ ७७

चतुर्णां पुरुषार्थानां प्रसवो यत्समाश्रयात् ।
हव्यकव्यप्रसूरेषा दीर्यते दैत्यभारतः ॥ ७८

जाता निखिलवेदानामुत्तमाङ्गोपधानतः ।
त्वत्पादकमलादेषा त्वदेकाधीनधारणा ॥ ७९

यदि न त्वरते नाथ भारव्यपनये भवान् ।
प्लावयिष्यन्त्युदन्वन्तः पृथिवीं पृथुवीचयः ॥ ८०

---

त इति ॥ हे नाथ तव तेजसि तेजः प्रताप एव तेजः अग्निस्तस्मिन् । यैर्दनुजैः शलभायितं शलभवदाचरितं तइमे क्षत्रियाभूत्वा इमां क्षमां पृथिवीं क्षोभयन्ति ॥ ७७ ॥

चतुर्णामिति ॥ चतुर्णां धर्मादीनां पुरुषार्थानां यत्समाश्रयात् यस्याः भूमेः समाश्रयात् प्रसवः उत्पत्तिः । एषा हव्यं देवार्थमन्नं कव्यं पित्रर्थञ्च प्रसूत इति हव्यकव्यप्रसूः सर्वौषधीनां दोग्ध्री भूमिः दैत्यानां भारतः भारेण दीर्यते विदीर्णा भवति । दिवादेराकृतिगणत्वात् श्यन् । सर्वथा सर्वपुरुषार्थोपयोगिनीयमवश्यं रक्षणीयेति भावः ॥ ७८ ॥

त्वत्पादोत्पन्नत्वात् त्वयैव रक्षणीयेत्याह । जातेति ॥ निखिलवेदानां उत्तमाङ्गानां शिरसां उपनिषदां उपधानतः प्रतिपाद्यत्वेन समाश्रयणीयतया उपधानभूतात् त्वत्पादकमलात् त्वत्पादपद्मात् एषा भूदेवी त्वदेकाधीनधारणा त्वदेकायत्तभरणकृत्या ॥ ७९ ॥

यदीति ॥ हे नाथ भवान् भारव्यपनये भूभारावतरणे यदि न त्वरते यदि विलम्बते तदा पृथुवीचयः महातरङ्गाः उदन्वन्तः सागराः पृथिवीं प्लावयिष्यन्ति सेचयिष्यन्ति भारेण भुवि मध्ये नमितायां निम्नप्रवणजला जलनिधयस्तां मज्जयिष्यन्तीत्यर्थः ॥ ८० ॥

करुणाधीनचित्तेन कर्णधारवती त्वया ।
मावसीदतु पृथ्वीयं महती नौरिवाम्भसि ॥ ८१

रशनारत्नरूपेण पयोधिरशना त्वया ।
प्रशान्तदनुजक्लेशा परिष्करणमर्हति ॥ ८२

कंसप्रभृतिभिस्सेयं शल्यैरिव समुद्धृतैः ।
चिरं भवतु ते पृथ्वी शेषमूर्तेश्शिखण्डकः ॥ ८३

प्रबोधसुभगैः स्मेरैः प्रसन्नैश्शीतलैश्च नः ।
कटाक्षैः प्लावय क्षिप्रं कृपैकोदन्वदूर्मिभिः ॥ ८४

---

**करुणेति** ॥ करुणाधीनचित्तेन दयापरतन्त्रहृदयेन त्वया कर्णधारवती नाविकवती इयं पृथ्वी महती नौरिव अम्भसि समुद्रोदके मावसीदतु अवसन्ना माभूत् माङिलुङित्यत्र गृहीतमाङोन्यः केवलोयम्माशब्दः प्रतिषेधार्थ इति लोडुपपत्तिः। त्वयि कर्णधारकल्पेजाग्रति नावइव भूमेरम्भस्यवसादोनयुक्तइत्यर्थः ॥ ८१ ॥

**रशनेति** ॥ पयोधिरशना समुद्रमेखला पृथिवी रशनारत्नरूपेण समुद्रशायित्वेन पृथ्वीमेखलायाः रत्नतुल्येन त्वया प्रशान्तदनुजक्लेशा सती परिष्करणं प्रसाधनं अर्हति । क्लेशमनुभवन्त्या किं परिष्करणेनेति दैत्योपसंहारेण क्लेशमपनीयपरिष्करणीयेति भावः ॥ ८२ ॥

**कंसेति** ॥ सा तथा क्लेशमनुभवन्ती इयं सन्निहिता पृथ्वी शल्यैः अन्तः प्रविष्टैश्शरैरिव समुद्धृतैः कंसप्रभृतिभिः चिरं ते तव शेषात्मिकायाः मूर्तेः शिखण्डकः काकपक्षः भवतु दैत्योपसंहारेण लाघवं प्राप्ता भूमिः शेषस्य शिखण्डकवत्सुवहा भवत्वित्यर्थः ॥ ८३ ॥

**प्रबोधेति** ॥ प्रबोधेन योगनिद्रापगमेन सुभगैः कान्तैः प्रसन्नैः भ्रूविकासमन्दस्मितानुगतैः "तत्प्रसन्नं भवेत्सभ्रूविलासं विस्मितञ्च यत्" इति ॥ स्मेरैः हर्षविकासिभिः भक्तजनतापहरत्वेनोपचारात् शीतलैश्च कृपैव एको मुख्यः

त्वयि न्यस्तभराणान्नस्त्वमेतां क्षन्तुमर्हसि ।
विदिताशेषवेद्यस्य विज्ञापनविडम्बनाम् ॥ ८५

इत्थं वदति देवानां समाजे वेधसा सह ।
ववन्दे पृथिवी देवं विनतत्राणदीक्षितम् ॥ ८६

तनुमध्या विशालाक्षी तन्वी पीनपयोधरा ।
मायेव महती तस्य वनितारत्नरूपिणी ॥ ८७

आबद्धमण्डलैर्भृङ्गैरलकामोदमोहितैः ।
अयत्नलब्धां बिभ्राणा मायूरच्छत्रसम्पदम् ॥ ८८

---

उदन्वान् समुद्रः तस्योर्मिभिः तरङ्गैः कटाक्षैः अपाङ्गदर्शनैः नः अस्मान् क्षिप्रं प्लावय सेचय ॥ ८४ ॥

त्वयीति ॥ त्वयि न्यस्तभराणां भरन्यासं शरणागतिं अनुष्ठितवतां नः अस्माकं विदिताशेषवेद्यस्य, तवेति शेषः । एतां विज्ञापनमेव विडम्बनां अनुचितकृत्यम् त्वं क्षन्तुमर्हसि ॥ ८५ ॥

इत्थमिति ॥ देवानां समाजे समूहे वेधसा ब्रह्मणा सह इत्थं वदति सति पृथिवी विनतत्राणे प्रणतरक्षणे दीक्षितं कृतव्रतं देवं ववन्दे ॥ ८६ ॥

तन्वीति ॥ तन्वी तन्वङ्गी तनुमध्या मध्यभागे ततोऽपि तनीयसी विशालाक्षी दीर्घलोचना पीनपयोधरा पीवरस्तनी वनितारत्नं वनितोत्तमा तद्रूपमस्याअस्तीति तथोक्ता । तस्य भगवतः महती मायेव स्थिता । अतिमोहनरूपेण मूर्ता विष्णोर्महामायेत्युत्प्रेक्षणीया । ववन्दे इति पूर्वेण सम्बन्धः ॥ ८७ ॥

आबद्धेति ॥ अलकानां कुटिलकेशानां आमोदेन सौरभेण मोहितैः परवशीकृतैः अतएव आबद्धमण्डलैः उपरि मण्डलमाबध्य भ्रमद्भिः भृङ्गैः अयत्नेन लब्धां मयूरच्छत्रसम्पदं मयूरपत्रकृतातपत्रशोभां बिभ्राणा धारयन्ती 'शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मी श्रीकान्तिसम्पदः' इति हलायुधः ॥ ८८ ॥

प्रियसन्दर्शनानन्दजनितैरश्रुबिन्दुभिः ।
न्यस्तमौक्तिकनैपथ्यैः परिष्कृतपयोधरा ॥ ८९

प्रस्फुरन्तं प्रियस्यैव परिरम्भाभिलाषिणम् ।
दक्षिणादितरं बाहुं दक्षिणा बहुमन्यत ॥ ९०

विपदश्च जगादैषा विपञ्चीमधुरस्वना ।
विलक्षस्मितसम्भिन्नमौक्तिकाधरविद्रुमा ॥ ९१

अथ तान् भव्यया वाचा भगवान् प्रत्यभाषत ।
प्रतिश्रुत्प्राप्तनिर्ह्रादपाञ्चजन्याभिनन्द्यया ॥ ९२

---

**प्रियेति ॥** प्रियस्य सन्दर्शनात् यः आनन्दः तेन जनितैः न्यस्तमौक्तिकनैपथ्यैः निवेशितमौक्तिकाभरणैः अश्रुबिन्दुभिः परिष्कृतपयोधरा अलंकृतकुचतया । आनन्दबाष्पबिन्दव एव कुचतटगतमुक्तानैपथ्यत्वेनाध्यवसिताः ॥ ८९ ॥

**प्रस्फुरन्तमिति ॥** दक्षिणा प्रवीणा शुभाशुभनिमित्तज्ञा प्रकर्षेण स्फुरन्तं अतएव प्रियस्य परिरम्भाभिलाषिणं आलिङ्गनमभीक्ष्णमभिलषन्तमिव स्थितं (अत्यन्ताभिलाषेण त्वरमाणो हि भ्रमति नैकत्रावतिष्ठते) दक्षिणात् इतरं वामं बाहुं बहु यथा तथा अमन्यत । 'वामभागश्च नारीणां श्रेष्ठः पुंसान्तु दक्षिणः । दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि च ॥' इति स्मृतेः शुभसूचकतया प्राशस्त्यात् बहुमेने ॥ ९० ॥

**विपदमिति ॥** विपञ्ची वीणेव मधुरस्वना हृद्यस्वरा एषा पृथ्वी विलक्षस्मितं विस्मयान्वितस्मितं लज्जान्वितस्मितं वा तेन सम्भिन्नमौक्तिकः संयुक्तमौक्तिकः अधरएव विद्रुमः प्रवालः यस्यास्तथाभूता सती विपदं जगाद च ॥ ९१ ॥

**अथेति ॥** अथ धरणीवचनानन्तरं भगवान् भव्यया कल्याण्या प्रतिश्रुत् प्रतिश्रुतिः प्रतिध्वनिः तया प्राप्तनिर्ह्रादस्य लब्धघोषस्य पाञ्चजन्यस्य भगवच्छङ्खस्य अभिनन्द्यया प्रतिध्वनिमता पाञ्चजन्येनाभिनन्द्यमानयेव स्थितया वाचा तान् देवान् प्रत्यभाषत ॥ ९२ ॥

मा भैषुरसुरानीकात् भवन्तो मदुपाश्रयाः ।
मदाज्ञामनवज्ञातुः परिभूत्या न भूयते ॥ ९३

अवतार्य भुवो भारमवतारो ममामराः ।
अनादिनिधनं धर्ममक्षतं स्थापयिष्यति ॥ ९४

यावदिष्टभुजो यावदधिकारमवस्थिताः ।
परिपालयत स्वानि पदानि विगतापदः ॥ ९५

दमनाद्दनुजेन्द्राणां द्रक्ष्यथ त्रिदशाधिपाः ।
भूयोऽपि लघुतां प्राप्तां भुवमुल्लाघितामिव ॥ ९६

---

**माभैषुरिति** ॥ अहमुपाश्रयः शरणं येषान्ते मदुपाश्रयाः भवन्तः असुरानीकात् दैत्यसैन्यात् माभैषुः भीतिं मागमन् मदाज्ञां अनवज्ञातुः मदाज्ञानतिलङ्घनशीलस्य परिभूत्या परिभवेन न भूयते । भावे लट् । मदाज्ञामनुवर्तमानानां न कुतोऽपि परिभवो भवतीत्यर्थः ॥ ९३ ॥

**अवतार्येति** ॥ हे अमराः मम अवतारः भुवो भारं दैत्यभारं अवतार्य निस्तार्य अनादिनिधनं आद्यन्तरहितं अनन्तकालप्रवाहेण एकरूपेण प्रवृत्तं धर्मं अक्षतं हानिरहितं स्थापयिष्यति ॥ ९४ ॥

**यावदिति** ॥ विगतापदः मदवतारेण दैत्यानामुपसंहारे सति अपहतापदः यावदिष्टभुजः यावदिष्टं भुञ्जानाः यावन्तीष्टानि यागादीनि तावन्ति भुञ्जानाइत्यर्थः । यावदधिकारं अवस्थिताश्च सन्तः स्वानि पदानि स्थानानि परिपालयत ॥ ९५ ॥

**दमनादिति** ॥ हे त्रिदशाधिपाः सुरश्रेष्ठाः दनुजेन्द्राणां असुरप्रधानानां दमनात् प्रमथनात् भूयोऽपि यथापूर्वं लघुतां प्राप्तां भुवं उल्लाघितां व्याधिमुक्तीकृतामिव द्रक्ष्यथ विलोकयिष्यथ ॥ ९६ ॥

दैतेयमृगसङ्घाते मृगयारसभागिभिः ।
भवद्भिरपि मेदिन्यां भवितव्यं नराधिपैः ॥ १७

इतिताननघादेशः समादिश्य जनार्दनः ।
अवधीरितदुग्धाब्धिर्मधुरायां मनो दधे ॥ १८

आश्वास्य वागमृतवृष्टिभिरादितेयान्
दैतेयभारनमितां पृथिवीं च देवीम् ।
प्रादुर्बुभूषुरनघो वसुदेवपत्न्यां
पद्मापतिः प्रणिदधे समयं दयायाः ॥ १९

---

दैतेयेति ॥ मेदिन्यां भवद्भिरपि दैतेयाः असुराएव मृगाः तेषां सङ्घाते समूहे संहारे वा मृगया आखेटकः तस्यां रसभागिभिः कौतुकयुक्तैः नराधिपैः भवितव्यम् । भवन्तोऽपि केषाञ्चिद्दुष्टानां वधार्थं क्षत्रियकुलेष्ववतरंत्वित्यर्थः ॥ १७ ॥

इतीति ॥ अनघादेशः अप्रतिहतनियोगः जनार्दनः विष्णुः इति उक्तप्रकारेण तान् विबुधान् समादिश्य आज्ञाप्य अवधीरितदुग्धाब्धिः अवमतितक्षीरांबुधिस्सन् मधुरायां मधुरानगरे मनः दधे । दुग्धाब्धिं विहाय मधुरायामवतरितव्यमित्यैच्छदित्यर्थः ॥ १८ ॥

अत्र 'सर्वत्रभिन्नसर्गान्तैः' इति लक्षणानुरोधेन सर्गावसाने वृत्तान्तरमाह ॥ आश्वास्येति ॥ अनघः निरवद्यः तत्तत्कर्मानुरोधितया वैषम्यनैर्घृण्यदोषरहितः पद्मापतिः श्रीपतिः वागेव अमृतं तस्य वृष्टिभिः आदितेयान् देवान् दैतेयानां असुराणां भारेण नमितां पृथिवीं देवीञ्च आश्वास्य वसुदेवस्य पत्न्यां देवक्यां प्रादुर्बुभूषुः प्रादुर्भवितुमिच्छुस्सन् दयायाः समयं अवसरं प्रणिदधे दध्यौ । असुरपीडितानां प्राणिनां देवकीवसुदेवयोश्च दयनीयतया तत्तत्कर्मानुसारेण समयं प्रतीक्षितवानित्यर्थः । वसन्ततिलकावृत्तम् ॥ १९ ॥

साधूनां स्वपदसरोजषट्पदानां
धर्मस्य स्थितिमनघां विधातुकामः ।
यद्गर्भं जगदखिलं स एव गर्भो
देवक्यास्समजनि देवदेववन्द्यः ॥ १००

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये महाकाव्ये
प्रथमः सर्गः ॥

---

साधूनामिति ॥ अखिलं जगत् यद्गर्भं यस्य कुक्षिस्थम् ' कुक्षौकुक्षिस्थितेगर्भः ' इति वैजयन्ती । देवानामपि देवाः ब्रह्मादयः तेषामपि वन्द्यः सएव वासुदेवः स्वस्य पदमेव सरोजं पद्मं तस्य षट्पदानां भ्रमराणां साधूनां धर्मस्य स्थितिं मर्यादां अनघां निर्दोषां विधातुकामः कर्तुकामस्सन् देवक्याः गर्भः समजनि सञ्जातः । प्रहर्षिणीवृत्तम् ॥ १०० ॥

इतीति ॥ इतिशब्दस्समाप्तिवाची प्रथमस्सर्गइत्येतदन्वयी कवयः काव्यकृतः तर्केण दीव्यन्तीति तार्किकाः वादिनः तेषां सिंहस्य परिपन्थिभूतानां तेषां सिंहवद्भयङ्करस्य सर्वेषु तन्त्रेषु सिद्धान्तेषु न्यायवैशेषिकपूर्वोत्तरमीमांसासाङ्ख्ययोगशैववैष्णवादिषु स्वतन्त्रस्य स्वेच्छया कञ्चिदर्थं स्थापयितुं दूषयितुं वा शक्तस्य वेदान्ताचार्यस्य वेदान्तरहस्यार्थोपदेष्टुः श्रीमद्वेङ्कटनाथस्य कृतिषु प्रबन्धेषु तत्कृतप्रबन्धानां मध्यइत्यर्थः । यादवाभ्युदये यादवस्य श्रीकृष्णस्य अभ्युदयं अधिकृत्य कृतेसर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैःसुसन्धिभिः । ' सर्वत्रभिन्नसर्गान्तैरुपेतं लोकरञ्जन 'मित्युक्तमहाकाव्यलक्षणयुक्ते प्रबन्धे इति प्रथमस्सर्गः ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीविश्वजिद्याजि श्रीरङ्गराजाध्वरीन्द्रसूनु-
श्रीमदप्पय्यदीक्षित विरचित यादवाभ्युदयव्याख्यानसङ्ग्रहे प्रथमस्सर्गः ॥

## ॥ द्वितीयः सर्गः ॥

अथागमानामनघेन भूम्ना धर्मस्य पूर्णेन धनागमेन ।
दिवौकसां दर्शयता विभूतिं देवी बभौ दौहृदलक्षणेन ॥ १

शृङ्गारवीराद्भुतचित्ररूपं गर्भे त्रिलोकैकनिधिं वहन्त्याः ।
परावरक्रीडितकर्बुराणि द्वेधाभवन्दौहृदलक्षणानि ॥ २

अशेषवेदैरधिगम्यभूम्ना सिद्धेन सिद्धैश्च निषेवितेन ।
अमानुषी नूनमभूदयत्नात् कृष्णेन केनापि रसायनेन ॥ ३

---

**अथेति** ॥ अथ भगवतो गर्भप्रवेशानन्तरं देवी राज्ञी आगमानां वेदानां अनघेन रम्येण 'अनघो निर्मलापापरम्येषु च निरामयः' इति रत्नमाला । भूम्ना बहुत्वेन प्रचयेन वेदप्रचारविरोधिदैत्यादिसंहरणार्थभगवदाविर्भावनिदानतया प्रचयहेतुत्वात् धर्मस्य पूर्णेन धनागमेन धनलाभेन धर्मस्य समृद्धिहेतुतया परिपूर्णधनलाभसादृश्यात् दिवौकसां देवानां विभूतिं ऐश्वर्यं दर्शयता तेषामैश्वर्यप्राप्तौ हेतुतया तत्प्रदर्शयितृसादृश्यात् दौहृदलक्षणेन गर्भचिह्नेन बभौ प्रचकाशे । अत्रैकस्यैव दौहृदलक्षणस्य भूमादिरूपेण रूपणान्मालारूपकालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रामेलनायत्ता उपजातिर्वृत्तमस्मिन्सर्गे ॥ १ ॥

**शृङ्गारेति** ॥ शृङ्गारवीराद्भुतैः रसविशेषैः चित्ररूपं नानारूपं त्रिलोकैकनिधिं त्रयाणां लोकानामेकास्पदभूतं भगवन्तं वहन्त्याः परावरक्रीडितेति द्वंद्वान्तस्थः प्रत्येकं सम्बद्ध्यते । तथा च गर्भे त्रिलोकैकनिधिमिति तन्मयताख्यातया परत्वपिशुनानि क्रीडितानि परक्रीडितानि शृङ्गारादिप्रचुरमिति तद्धर्मसङ्क्रान्त्या लोकवदवरत्वपिशुनानि अवरक्रीडितानि द्विविधान्यपि 'लिलेख विश्वानि जगन्त्यमिद्धे' त्यादिभिः श्लोकैरग्रे वर्णयिष्यति । तैः कर्बुराणि चित्राणि दौहृदलक्षणानि गर्भचिह्नानि द्वेधा परावररूपतया द्विप्रकाराणि अभवन् प्रादुर्भूतानीत्यर्थः ॥ २ ॥

**अशेषेति** ॥ अशेषवेदैः अधिगम्यभूम्ना सकलवेदप्रतिपाद्यमहिम्ना सिद्धेन नित्येन रसायनपक्षे प्रसिद्धेन सिद्धैः देवयोनिविशेषैः निषेवितेन पूजितेन

शतह्रदाबन्धुरया स्वकान्त्या सञ्चारिजांबूनदबिम्बकल्पा ।
अत्यन्तसिद्धेन रसायनेन कालेन भेजे कलधौतलक्ष्मीम् ॥ ४

मयूरपिञ्छद्युतिभिर्मयूखैस्तत्कान्तिरन्तर्वसतस्त्रिधाम्नः ।
श्यामा बहिर्मूलसिता बभासे मङ्गल्यरत्नाङ्कुरपालिकेव ॥ ५

काले बभासे वसुदेवपत्न्याः कर्पूरलिप्तेव कपोलशोभा ।
शशिप्रभा सप्तमगर्भकान्तिरच्युतावशिष्टेव शनैरुदीर्णा ॥ ६

---

अन्यत्र कायसिद्धियुक्तैः प्राक् तदर्थं स्वीकृतेन कृष्णेनैव केनापि अचिन्त्यप्रभावेण रसायनेन औषधविशेषेण 'रसायनं विहङ्गेऽपि जराव्याधिहरौषधे' इति विश्वः । अयत्नात् यत्नमनपेक्ष्य नूनं अमानुषी अभूत् कथमन्यथा मानुष्यास्तादृशस्तेजो विशेष इति भावः ॥ ३ ॥

पूर्वेण श्लोकेन परत्वपिशुनं दौहृदलक्षणमुक्तं लोकरीत्येदानीमङ्गेषु भाव-स्यापत्तिं तावत् षड्भिः श्लोकैर्वर्णयति ॥ शतेति ॥ शतह्रदाबन्धुरया विद्युन्मनो-हरया 'सुरूपं हारिबन्धुरम्' इत्यमरशेषः । स्वकान्त्या निजशोभाविशेषेण 'मन्म-थाप्यायनकरी शोभा कान्तिर्निगद्यते' इति यादवः । सञ्चारिजाम्बूनदबिम्बकल्पा सञ्चारवत्कनकप्रतिमासदृशी देवकी अत्यन्तसिद्धेन उपनिषत्प्रसिद्धेन रसायनेन कृष्णेन कृष्णे रसायनत्वाध्यवसायादतिशयोक्तिः । कालेन कालक्रमेण कलधौत-लक्ष्मीं रजतशोभां भेजे रसायनास्वादोऽपि वर्णान्तरङ्करोतीति भावः ॥ ४ ॥

मयूरेति ॥ अन्तः गर्भे वसतः त्रिधाम्नः श्रीकृष्णस्य मयूरपिञ्छद्युतिभिः बर्हिबर्हाभैः मयूखैः किरणैः बहिः उपरिभागे श्यामा मूलसिता अधः प्रदेशे शुक्ला तत्कान्तिः तस्याः देवक्याः द्युतिः मङ्गल्यरत्नाङ्कुराणां पालिका आवलिरिव बभासे चकाशे अङ्कुरा अप्युपरिभागे श्यामला मूले शुभ्राश्च भवन्ति तथा च देवकीप्रभा-मतीत्योपरि गच्छद्भिः कृष्णप्रभाकन्दलैः श्यामलिताभा देवकीप्रभा मङ्गल्या जग-न्मङ्गलार्थानुष्ठिताङ्कुरार्पणकर्मकृतारत्नांकुरपङ्क्तिरिव बभासइत्यर्थः ॥ अत्र कृष्णप्रभा-निर्गमनोक्त्या परत्वज्ञापकंदौहृदलक्षणमुक्तम् ॥ ५ ॥

काल इति ॥ वसुदेवपत्न्याः काले गर्भोपचयसमये कर्पूरलिप्तेव स्थिता तथा शुभ्रा कपोलशोभा (कर्त्री) शशिनः प्रभेव प्रभा यस्यास्सा शशिप्रभा ।

नवेन्दुनिष्यन्दनिभश्चकाशे वर्णः प्रतीकेषु मधुद्रवाङ्ग्याः ।
अन्तःस्थितेन प्रथमेन पुंसा प्रवर्तितं सत्वमिवावदातम् ॥ ७

करम्बिता किञ्चिदिव प्रसृतैस्तेजोभिरन्तर्वसतस्त्रिधाम्नः ।
मरीचिभिस्स्वैरभवत्प्रजानां मङ्गल्यरत्नाङ्कुरपालिकेव ॥ ८

तस्यास्सुधोल्लासजुषः कटाक्षास्संक्षुब्धदुग्धांबुधिसौम्यभासः ।
जगत्त्रयीसौधविलेपनार्हां वितेनिरे वर्णसुधामपूर्वाम् ॥ ९

---

च्युतावशिष्टा गर्भसंक्रमणानिष्क्रान्ता कान्तेरवशिष्टा शनैः कालक्रमेण उदीर्णा उद्गता सप्तमगर्भस्य बलदेवस्य कान्तिरिव बभासे । कृष्णस्य देवकीगर्भे प्रवेशात्पूर्वन्तत्र सप्तमस्सन्निविष्टो बलदेवः भगवन्मायया ततस्समाकृष्य रोहिणीगर्भे निवेशित इति पुराणकथा ॥ ६ ॥

**नवेति ॥** मधुद्रवाङ्ग्याः नयनाप्यायनं लावण्यं मधुत्वेनाध्यवसितं तत् द्रवन्त्येभ्य इति मधुद्रवाणि तथाभूतान्यङ्गानि यस्यास्सा मधुद्रवाङ्गी तस्याः देवक्याः प्रतीकेषु अवयवेषु नवेन्दुनिष्यन्दनिभः नवेन इन्दोः अमृतनिष्यन्देन सदृश इत्यस्वपदविग्रहः । वर्णः शुभ्रवर्णः अन्तः गर्भे स्थितेन प्रथमेन पुंसा आदिपुरुषेण प्रवर्तितं अवदातं रजस्तमोनभिभूततया शुद्धं सत्वमिव चकाशे सत्वगुणस्य शुभ्रत्वं भगवतस्सत्वप्रवर्तकत्वञ्च श्रुतिप्रसिद्धम् ॥ ७ ॥

**करम्बितेति ॥** अन्तर्वसतः त्रिधाम्नः किञ्चिदिव प्रसृतैः ईषत् प्रसृतैः (इवशब्दो वाक्यालङ्कारे) तेजोभिः करम्बिता संपृक्ता देवकी स्वैः मरीचिभिः किरणैः प्रजानां जनानां मङ्गल्यरत्नांकुरपालिकेव अभवत् मयूरपिञ्छेति श्लोके तत्कान्तीनां रत्नांकुरपङ्क्तित्वेनोत्प्रेक्षा इह तस्याः तदाधारपात्रत्वेनोत्प्रेक्षेति भेदः ॥

**तस्या इति ॥** सङ्क्तः क्षुब्धः मन्थाचलो यस्मिन् सः संक्षुब्धः दुग्धांबुधिः क्षीरसमुद्र इव सौम्या मनोज्ञा भाः कान्तिः यस्यास्तथाभूतायाः मन्थक्षोभेण परावर्तनसमये धावल्याधिक्यं दृश्यत इति कटाक्षास्सुधासाम्येन वर्ण्यन्त इति च तस्या :मन्दरक्षुभितदुग्धोदधिसाम्योक्तिः । तस्या देवक्याः सुधोल्लासजुषः अमृतविभ्रमयुक्ताः कटाक्षाः जगत्त्रय्याएव सौधस्य विलेपनमर्हतीति विलेपनार्हां तां

रक्षाविधौ राक्षसदानवानां कारागृहे कंसनियोगभाजाम् ।
संपश्यमाना सकृदीक्षिता वा सञ्क्षोभयामास मनांसि सैषा ॥
भुक्ता पुरा येन वसुन्धरा सा सविश्वभोक्ता मम गर्भभूतः ।
इति ध्रुवं सूचनमाचरन्ती तत्तादृशं नाटितकं ततान ॥ ११
समाधिसुक्षेत्रकृषीवलानां सन्तोषसस्योदयमेघकान्त्या ।
चकास तस्यास्स्तनचूचुकाभा गर्भत्विषा गाढमिवानुलिप्ता ॥ १२

---

अपूर्वां अप्रसिद्धां विलक्षणां वर्णसुधां धवलवर्णमेव सुधां विलेपनद्रव्यविशेषं वितेनिरे चक्रुः। कविसमये वीक्षणानि प्रकृत्यापि धवलानि वर्ण्यन्ते विशेषतश्च गर्भविषय इति सुधोल्लासजुष इत्युक्तम् ॥ ९ ॥

रक्षेति ॥ सा प्रसिद्धा एषा देवकी कारागृहे बन्धनालये रक्षाविधौ देवकीवसुदेवयोर्निरुद्धसंरक्षणकृत्ये कंसनियोगभाजां राक्षसानां दानवानाञ्च मनांसि (कर्माणि) सम्पश्यमाना स्वयन्तान् द्रष्टुं शीलवती (ताच्छील्ये चानश्) सकृदपि ईक्षिता तैर्दृष्टा वा संक्षोभयामास रक्षो सुरविरोधिविष्णुतेजोभरितत्वात् भयसंरम्भक्षुभितान्यकरोदित्यर्थः ॥ १० ॥

भुक्तेति ॥ सा देवकी पुरा पूर्वं येन वसुन्धरा भूमिः भुक्ता आदिवराहादिरूपेण देवतारूपा वा रघुनाथादिरूपेण गोलकरूपा वा उपभुक्ता सः विश्वभोक्ता सर्वस्यापि हव्यकव्यादेः भोक्ता भगवान् मम गर्भभूतः गर्भं प्राप्तः (भूधातुरिहप्राप्त्यर्थः) इति ध्रुवं नूनं सूचनं अभिव्यञ्जनं आचरन्ती सती तत्तदिव दृश्यत इति तत्तादृशं तत्तद्भगवच्चरित्रसदृशं नाटितकं अभिनयं वसुन्धरोपभोगरूपं ततान चकार अत्र गर्भकालसप्रयुक्तमृद्भक्षणं भगवद्भुक्तार्थसूचकाभिनयत्वेन उत्प्रेक्षितम् ॥ ११ ॥

समाधीति ॥ तस्याः स्तनचूचुकयोः स्तनाग्रयोः आभा शोभा समाधिः ध्यानमेव सुक्षेत्रं उत्तमकेदारः तत्र कृषीवलानां कर्षकाणां सन्तोष एव सस्यं तस्योदये मेघकान्त्या योगिनामानन्दोद्गमकारणभूतया गर्भस्य भगवतः त्विषा आभया गाढं भृशं अनुलिप्तेव चकास शुशुभे। धातूनामनेकार्थत्वात् कसगताविति धातुश्शोभायामपि वर्तते ॥ १२ ॥

कस्तूरिकाकाम्यरुचिस्तदीया रम्या बभौ चूचुकरत्नकान्तिः।
तद्गर्भसन्दर्शनलोलुपानामन्तर्दृशामञ्जनकल्पनेव ॥ १३

परावराणां प्रभवस्य पुंसः प्रकाशकत्वं प्रतिपद्यमानाम्।
अभावयन्भावितचेतसस्तां विद्यामयीं विश्वपितामहीञ्च ॥ १४

लिलेख विश्वानि जगन्त्यभिज्ञा लीलाहृते चित्रपटे यथार्हम्।
प्रायः प्रजानां पतयः प्रतीताः यन्मातृकास्स्वेषु विधिष्वभूवन् ॥

---

कस्तूरिकेति ॥ कस्तूरिकया काम्या अभिलषणीया तदतिशायिनो रुचिः प्रभा यस्यास्सा रम्या तस्या इयं तदीया चूचुकरत्नयोः रत्नतुल्ययोः चूचुकयोः कान्तिः शोभा तस्याः गर्भस्थ भगवतः सन्दर्शने लोलुपानां आसक्तानां अन्तर्दृशां प्रत्यग्दृष्टीनां योगिनां (अञ्जनसामर्थ्यादन्तः प्रवेशितदृशामित्यपि गम्यते) अञ्जनकल्पनेव दृशामन्तः प्रवेशनसमये स्तनलग्नं अञ्जनरञ्जनमिव बभावित्युत्प्रेक्षा॥ १३॥

परेति ॥ परावराणां उत्कृष्टापकृष्टरूपाणां पूर्वापररूपाणां वा सर्वेषां जगतां प्रभवस्य कारणस्य पुंसः भगवतः प्रकाशकत्वं प्रतिपत्स्यमानां प्राप्स्यतीं तां देवकीं भावितचेतसः संस्कृतान्तःकरणाः ज्ञानिनः विद्यामयीं विद्यानिधिं विश्वपितामहीञ्चाभावयन्। त्रय्यन्तवत् परमात्मनः प्रकाशिकेति परविद्यानिधानरूपां विश्वजनकस्य प्रकाशिका लोकदृष्ट्या मातेति विश्वपितामहीञ्च मेनिर इत्यर्थः॥ १४॥

लिलेखेति ॥ अभिज्ञा भगवन्मयत्वं प्राप्य सकललोकसंस्थानाभिज्ञा देवकी लीलया आहृते चित्रपटे आलेख्ययोग्यपटे आश्चर्ये पटे वा । यथार्हं यथोचितम्। यत्र यल्लेखनीयं तत्र तदनतिक्रम्येत्यर्थः। विश्वान्यपि जगन्ति अखिलानपि लोकान् लिलेख । प्रजानां पतयः स्रष्टारः प्रायः नूनं यन्मातृका या देवकीलिखितचित्रपटी मातृका येषां तथाभूतास्सन्तः । स्वेषु विधिषु स्वकृत्येषु प्रतीताः ख्याताः अभूवन् । प्रजापतीनामपि जगत्सृष्टौ अनया लिखितचित्रपटः प्रायो मातृकाभूदित्युत्प्रेक्षा ॥ १५ ॥

निराशिषां पद्धतिमाददाना नैश्रेयसीं नीतिमुपन्नयन्ती ।
पुण्याशया पूर्वयुगप्ररोहमियेष देवी भुवने विधातुम् ॥ १६

अनाप्तपूर्वं किमपेक्षितन्ते किं भुक्तपूर्वेष्वधुनोपदद्याम् ।
वयस्ययाऽभावविदानुयुक्ता न किञ्चिदित्येव जगाद नाथा ॥ १७

अनादरे देवि सखीजनानां दया न दूयेत कथं तवेति ।
उपह्वरे सल्लपिता मनोज्ञैरालोकनैरुत्तरमाचचक्षे ॥ १८

---

**निरिति ॥** निराशिषां निरभिलाषाणां विरक्तानां पद्धतिं मार्गं आददानास्वीकुर्वती नैश्रेयसीं निश्रेयससम्बन्धिनीं मुक्त्युपयोगिनीं नीतिं अवहिंसेनस्कतादिरूपां उपन्नयन्ती आश्रयं कुर्वती पुण्याशया शुद्धान्तःकरणा देवी देवकी भुवने पूर्वयुगप्ररोहं सर्वपूर्वस्य कृतयुगस्याङ्कुरं विधातुं इयेष । सत्वगुणसमृद्धस्य धर्मसंस्थापनरतस्य च भगवतस्तादात्म्यापत्त्या तादृशीमेव शैलीमाश्रित्य कृतयुग इव चतुष्पादं धर्मं प्रतिष्ठापयितुमैच्छदित्यर्थः ॥ १६ ॥

**अनाप्तेति ॥** पूर्वं अनाप्तं अनाप्तपूर्वं किं वस्तु ते तवापेक्षितं अथवा भुक्तपूर्वेष्वेव अधुना इदानीं किं वस्तु उपदद्यां उपहरेयं इत्यनेन प्रकारेण अभावविदा भगवद्रूपायास्तस्याः नित्यतृप्ततया न क्वाप्यन्यासरं गर्भिणीनामिव स्पृहेति तदभिप्रायमजानन्त्या वयस्यया स्निग्धया अनुयुक्ता पृष्टा नाथा स्वामिनी देवकी न किञ्चिदित्येव गदितवती ॥ १७ ॥

**अनादर इति ॥** हे देवि तव सखीजनानां दया सखीजनविषया कृपा कथं न दूयेत न परितप्येत तप्येतैवेत्यर्थः । अतो दयापरतन्त्रया त्वया पूर्ववत्सल्लापनादिना सख्यस्सन्माननीया इति भावः । इति उपह्वरे रहसि सल्लपिता सखीभिस्सम्भाषिता सती मनोज्ञैः स्निग्धैः आलोकनैः उत्तरं आचचक्षे उक्तवती । अखिलजगत्प्रभोरावेशनात्स्वयमपि प्रभुशक्तिमाश्रित्य तादृशामेव शैलीमन्ववर्ततेत्यर्थः । अनेन गर्भप्रयुक्तं दौर्बल्यन्दर्शितम् ॥ १८ ॥

अशेत सा काममजातनिद्रा मातुं प्रवृत्तेव पदानि चक्रे ।
अध्यास्त लोकानवधीरयन्ती भद्रासनं भावितपारमेष्ठ्या ॥ १९

परिक्रमप्रेक्षितभाषिताद्यैरन्यादृशैराप्तविभावनीयैः ।
मदोपपन्ना मदलालसा वा जितश्रमा वेति जनैश्शशङ्के ॥ २०

शेषे शयानां गरुडेन यान्तीं पद्मे निषण्णामधिरत्नपीठम् ।
हयाननैराश्रितवन्दिकृत्यां स्वामाकृतिं स्वप्नदृशा ददर्श ॥ २१

---

अशेतेति ॥ सा देवकी अजातनिद्रापि कामं अत्यर्थं अशेत शेते स्म । मातुं प्रवृत्तेव इयन्ति पदानीति सञ्चारभूमिं परिमातुं प्रवृत्तेव पदानि चरणविन्यासान् चक्रे लोकान् परिसरवृत्तिजनान् अवधीरयन्ती अनादृत्य वर्तमाना भावितपारमेष्ठ्या अनुसंहितपरमेश्वरचरिता च सती भद्रासनं सुखासनं अध्यास्त अध्यतिष्ठत् । 'अधिशीङ्स्थासाङ्कर्म' इत्यासनस्य कर्मत्वम् । 'भद्रङ्कल्याणसौख्ययोः' इति यादवः । अत्र दुर्वहगर्भवहनात् आलस्येन निद्राभावेऽपि शयनम् । गमनेषु ग्लान्या परिजनेष्वरतिः । आर्तिसमयोचितं भगवच्चरितानुचिन्तनं सञ्चारासहिष्णुतया सुखासनेऽवस्थानञ्च दर्शितम् । अनेन भगवदावेशकृतन्तच्चरितानुकरणमपि दर्शितं पूर्वार्धे शेषशयनत्रिविक्रमचरितानुकरणप्रतीतेः उत्तरार्धे च भावितपारमेष्ठ्या प्राप्तपरमेश्वरभावा अतएव लोकानवधीरयन्ती जयन्ती च भद्रासनं राजासनमध्यास्तेति पारमैश्वर्यानुकरणप्रतीतेश्च ॥ १९ ॥

परिक्रमेति ॥ अन्यादृशैः पूर्वविलक्षणप्रकारैः आप्तविभावनीयैः निलान्तरङ्गावगन्तव्यैः परिक्रमप्रेक्षितभाषिताद्यैः सञ्चरणावलोकनसम्भाषणादिभिः मदोपपन्ना मदकरद्रव्यसेवाकृतेन मदेन युक्ता । मदलालसा मन्थरा वा जितश्रमा श्रमजिता वेति जनैः शशङ्के शङ्क्यते स्म । अत्रापि ग्लानिः प्रभुशक्तिमन्थरता चेति द्वयमपि प्रतीयते ॥ २० ॥

शेष इति ॥ स्वां आकृतिम् । शेषे अनन्ते शयानां गरुडेन यान्तीं अधिरत्नपीठं रत्नपीठोपरि पद्मे निषण्णां उपविष्टां हयाननैः किं पुरुषैः आश्रितवन्दिकृत्यां अवलम्बितस्तुतिपाठकृत्याञ्च स्वप्नदृशा स्वप्नरूपया दृष्ट्या ददर्श ॥ २१ ॥

अन्तःस्थितं यस्य विभोरशेषं जगन्निवासं दधती तमन्तः ।
तदात्मनो विश्वमपश्यदन्तस्तर्कातिगन्तादृशमद्भुतन्नः ॥ २२

सुरासुराधीश्वरमौलिघाताद्विशीर्णजाम्बूनदवेत्रशृङ्गम् ।
आलक्ष्यसन्तोषमलक्ष्यमन्यैरनीकनेतारमवैक्षतारात् ॥ २३

त्रिलोकमङ्गल्यनिधेस्त्रिवेद्याः सञ्जीवनीं वाचमुदीरयन्ती ।
नियोगयोग्याननघप्रसादा नाकौकसान्नामभिराजुहाव ॥ २४

---

अन्तरिति ॥ अशेषं विश्वं विभोः अपरिच्छिन्नस्य यस्य अन्तः जठरे स्थितम् । जगन्निवासं तं अन्तर्दधती देवकी तत् कृष्णस्य जठरे स्थितं विश्वं आत्मनः स्वस्य अन्तरपश्यत् । नन्वपरिच्छिन्नस्य कथमस्या उदरे अवस्थानं कथञ्च तदुदरे स्थितस्य स्वोदरे दर्शनमत्राह—तर्कातिगमिति तादृशं भगवत्सङ्कल्पकृतं अद्भुतं आश्चर्यं नः अस्माकं तर्कातिगं तर्कमतिक्रान्तम् । अतर्क्यमहिम्नो भगवतस्सङ्कल्पेन कृते कानुपपत्तिरिति भावः ॥ २२ ॥

सुरेति ॥ सुरासुराधीश्वराणां भगवत्सेवार्थं द्वारि समागतानां देवासुरप्रधानानां मौलिषु किरीटेषु घातात् ताडनात् विशीर्णं जर्जरीभूतं जाम्बूनदवेत्रशृङ्गं कनकवेत्राग्रं यस्य तम् । आलक्ष्यसन्तोषं अभिव्यक्तानन्दं अन्यैः अलक्ष्यं अदृश्यं अनीकनेतारं सेनान्यं विष्वक्सेनं आरात् समीपे अवैक्षत ददर्श ॥ २३ ॥

त्रीति ॥ त्रयाणां लोकानां मङ्गल्यनिधेः श्रेयोनिधानभूतायाः त्रयाणां वेदानां समाहारस्य त्रिवेद्याः सञ्जीवनीं प्रजीवनकारिणीं वेदार्थरहस्यगोचरतया तत्प्रवणपदां वाचं उदीरयन्ती कथयन्ती अनघप्रसादा अवितथानुग्रहा सा नियोगयोग्यान् नियोज्यान् नाकौकसां देवानां नामभिः इन्द्रचन्द्रादिनामभिः आजुहाव आहूतवती भगवत्तादात्म्यभावनया स्वनियोज्येष्वपि तदीयनियोज्येष्विव इन्द्रादिबुद्धिरेव तस्या बभूवेति भावः ॥ २४ ॥

यदृच्छया यादवधर्मपत्नी यामाह धर्मेषु परावरेषु ।
अदृष्टपूर्वापरयापि वाचा प्रतिश्रुता नूनमभावि तस्याः ॥ २५

क्रियामुपादित्सत विश्वगुप्त्या कृतापराधेऽपि कृपामकार्षीत् ।
मुनीन्द्रवृत्त्या मुखरीभवन्ती मुक्तिक्षमां वक्तुमियेष विद्याम् ॥ २६

सतां चतुर्वर्गफलप्रसूतौ नारायणे गर्भगते नताङ्गी ।
अभङ्गुरामुन्नतिमाश्रयन्ती सर्वस्य सादित्सत सर्वमेका ॥ २७

---

**यदृच्छयेति ॥** यादवस्य धर्मपत्नी यदृच्छया स्वेच्छया नतु शास्त्रपर्यालोचनया परावरेषु निःश्रेयसाभ्युदयहेतुतया उत्कृष्टापकृष्टरूपेषु धर्मेषु विषयेषु यां वाचं आह जगाद तस्याः वाचः अदृष्टपूर्वापरया अनालक्षितपूर्वापरकोट्या वाचा वेदवाचापि नूनं प्रतिश्रुता प्रतिध्वनिना अभावि भूतम् । भावेलुङ् । तस्या अपि धर्मरहस्यनिष्ठवर्धकत्वात् वेदानामप्युपजीव्यासीदित्यर्थः । आहेत्युवाचार्थे निपातरूपमव्ययम् ॥ २५ ॥

**क्रियामिति ॥** विश्वगुप्त्या लोकरक्षणेन क्रियां उपादित्सत विश्वगुप्तिरूपमेव क्रियामुपादातुमैच्छदित्यर्थः । किञ्च कृतापराधेऽपि जने कृपां अकार्षीत् करोति स्म । मुनीन्द्राणां वृत्त्या अध्यात्मचिन्तनरूपया मुखरीभवन्ती शब्दायमाना सती मुक्तिक्षमां मोक्षोचितां विद्यां परविद्यां वक्तुं इयेष इच्छति स्म ॥ २६ ॥

**सतामिति ॥** नताङ्गी स्तनभारनमिताङ्गी सतां साधूनां चतुर्णां धर्मार्थकाममोक्षाणां वर्गएव फलं तस्य प्रसूतिः उत्पत्तिर्यस्मात्तस्मिन् महावदान्ये नारायणे गर्भङ्गते सति अभङ्गुरां अभङ्गशीलां उन्नतिं दानोत्साहरूपाञ्चित्तोन्नतिं आश्रयन्ती एका सा देवकी सर्वस्य सर्वं आदित्सत एकदैव मया सर्वेपि सर्वाभीष्टदानेन तोषणीया इत्यैच्छदित्यर्थः ॥ २७ ॥

कृशोदरी तारकयाभिनन्द्या केनापि धाम्ना कृतवृद्धियोगा ।
अतीत्य कार्श्यं क्रमशः प्रपेदे परामभिख्यां तनुरैन्दवीव ॥ २८

निगूढमन्तर्दधता निविष्टं पद्मापरिष्कारमणिं प्रभूतम् ।
मध्येन काले प्रचितेन तस्या मञ्जूषया रूप्यभुवा बभूवे ॥ २९

शनैश्शनैस्तामुपचीयमानामन्तस्स्थकृष्णामवलोकयन्तः ।
दर्शान्तदीप्तामिव चन्द्रलेखां चक्रुश्चकोरायितमात्मनेत्रैः ॥ ३०

---

कृशेति ॥ गर्भसमये केनापि अतर्क्यमहिम्ना धाम्ना भगवत्तेजसा कृतवृद्धियोगा तारकया अक्ष्णः कनीनिकया गर्भकालस्निग्धया अभिनन्द्या श्लाघ्या उडूनां ताराभिरभिनन्द्येति वा कृशं उदरं यस्याः सा देवकी क्रमशः दिवसक्रमेण कार्श्यं कृशत्वं अतीत्य परां उत्कृष्टां अभिख्यां शोभां प्रपेदे प्राप । ऐन्दवी इन्दुसम्बन्धिनी तनुरिव यथेन्दुकला शुक्लपक्षारम्भसमये सौरतेजसा कृतवृद्धियोगा ताराभिः परितः स्थितैर्नक्षत्रैरभिनन्द्या च कार्श्यमतीत्य क्रमेण परां शोभां प्रतिपद्यते तद्वदित्यर्थः ॥ २८ ॥

निगूढमिति ॥ अन्तः निगूढं यथा तथा निविष्टं स्थितं प्रभूतं अदभ्रं पद्मापरिष्कारमणिं लक्ष्म्याः प्रसाधनरत्नमिति भगवति तथात्वाध्यवसायरूपातिशयोक्तिः । दधता धारयता काले गर्भोपचयसमये प्रचितेन पुष्टेन तस्याः मध्येन रूप्यभुवा रजतप्रभवया मञ्जूषया पेटिकया बभूवे । भावे लिट् । मणिर्मञ्जूषायामभिरक्ष्यत इति भावः ॥ २९ ॥

शनैरिति ॥ शनैश्शनैः उपचीयमानां अन्तस्स्थकृष्णां अन्तर्गतदामोदरां चन्द्रलेखापक्षे अन्तर्गतकृष्णमृगां अतएव दर्शान्ते शुक्लपक्षारम्भे दीप्तां चन्द्रलेखामिव स्थितां तां अवलोकयन्तः जनाः आत्मनेत्रैः चकोरायितं चकोरवदाचरणं अनन्यपरतया तल्लावण्यसुधापानं चक्रुः ॥ ३० ॥

मयि स्थिते विश्वगुरौ च कृष्णे माभूद्भुवो भार इतीव मत्वा ।
सखीजनानामवलम्ब्य हस्तान् सञ्चारलीलां शनकैश्चकार ॥ ३१

मुकुन्दगर्भा मुकुरेषु देवी नापश्यदात्मानमवाप्तभूषा ।
नाथत्विषा नन्दकदर्पणेनादिदृक्षतात्मानमदृश्यमन्यैः ॥ ३२

स्रजः प्रभूता न शशाक वोढुं दूरे कथा रत्नविभूषणानाम् ।
भविष्यति क्षोणिभरापनोदे प्रत्यायनं प्राथमिकं तदासीत् ॥ ३३

---

मयीति ॥ विश्वस्य गुरौ पितरि विश्वस्माद्गुरुत्वयुक्ते च कृष्णे मयि अधिकरणभूतायां स्थिते सति भुवो भारो माभूत् गुरुभारं वहन्त्या मम दृढपदन्यासे भुवो महान् भारः स्यात् स माभूदिति मत्वेव सखीजनानां हस्तानवलम्ब्य शनकैरदूरं सञ्चारलीलां चकार । दौर्बल्यप्रयुक्तसञ्चारमान्द्ये भूभारं प्रत्युचितकृष्णगुरुत्वस्य हेतुत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षालङ्कारः ॥ ३१ ॥

मुकुन्देति ॥ मुकुन्दो गर्भः कुक्षिस्थो यस्यास्सा देवी अवाप्तभूषा धृतभूषणा सती आत्मानं मुकुरेषु दर्पणेषु नापश्यत् किन्तु अन्यैरदृश्यं आत्मानं नाथे गर्भगते भगवति त्वेषति दीप्यत इति नाथत्विट् तेन नन्दकेन तत्खड्गेनैव दर्पणेन अदिदृक्षत द्रष्टुमैच्छत् लौकिकदर्पणेषु सकलदृश्यस्यस्वशरीरस्य दर्शनं सदाक्रियमाणत्वादनादृत्य 'तदात्मनो दृश्यमपश्यदन्तः' इति पूर्वोक्तरीत्या स्वान्तस्स्थितविश्वान्तर्गतत्वात्परैर्द्रष्टुमशक्यं स्वशरीरं सन्निहिते भगवत्खड्ग एव दिव्यदर्पणे द्रष्टुमैच्छदित्यर्थः ॥ ३२ ॥

स्रज इति ॥ प्रभूताः बह्वीः स्रजः माल्यानि वोढुं न शशाक । दौर्बल्यादिति भावः । रत्नविभूषणानां रत्नप्रधानाभरणानां कथा दूरे । तेषान्ततोऽपि भारादिति भावः । भविष्यति भगवदवतारानन्तरभाविनि क्षोणिभरापनोदे भूभारनिरासे तत् तस्यामाल्याभरणापनोदनमेव प्राथमिकं प्रथमकालभवं प्रत्यायनं ज्ञापकमासीत् । यत्रावतरति श्रीकृष्णस्तत्र भारापनोदनावश्यतायामेतत्प्रथमप्रवृत्तमुदाहरणमासीदित्यर्थः ॥ ३३ ॥

दिवौकसो देवकवंशलक्ष्मीं विलोक्य तां लोकनिदानगर्भाम् ।
विभूतिमग्रेसरवेदवादा व्याचख्युरस्या विविधप्रकारम् ॥ ३४

पतिस्ससत्वामपि तत्प्रभावाददुःखशीलां समये भवित्रीम् ।
सुखैकतानामवलोक्य देवीं स्वसम्पदं सूचयतीति मेने ॥ ३५

पितृत्वमासाद्य सुरासुराणां पितामहत्वं प्रतिपत्स्यमानः ।
अनन्तगर्भामवलोक्य देवीमतुष्यदन्येषु गताभिलाषः ॥ ३६

तापोपशान्तिं जगतां दिशन्ती सन्ध्या परा साधुजनप्रतीक्ष्या ।
तामीदृशीं विश्वपितुः प्रसूतिं संवेदयन्तीव समाजगाम ॥ ३७

---

दिवौकस इति ॥ दिवौकसः देवाः देवकः कंसपितुरुग्रसेनस्य भ्राता तद्वंशस्य लक्ष्मीं सम्पदमिव सम्पदं आनन्दहेतुत्वात् तां देवकीं लोकनिधानं जगन्निवासः कृष्णो गर्भो यस्यास्तथाभूतां विलोक्य अग्रेसरवेदवादाः पुरस्कृतवेदोक्तयस्सन्तः अस्याः विविधप्रकारां विभूतिं बहुप्रकारमैश्वर्यं व्याचख्युः व्याख्यान्ति स्म । वेदगीर्भिरस्तुवन्नित्यर्थः ॥ ३४ ॥

पतिरिति ॥ तस्याः पतिः वसुदेवः ससत्वां गर्भवतीमपि तस्य गर्भस्य प्रभावात् माहात्म्यात् न दुःखं शीलति प्राप्नोतीत्यदुःखशीलां गर्भभरणक्लेशरहितां समये आसन्नप्रसवकालेऽपि सुखैकतानां भवित्रीं सुखैकरूपां सतीं गर्भचलनक्लेशं विनैव सुखमासीनां देवीं अवलोक्य स्वस्य सम्पदं अभिवृद्धिं सूचयतीति मेने । इदमशरीरकाव्यानुरोधेनान्यादृशस्याष्टमगर्भस्य प्रभावादेवेति स्वाभिवृद्धिञ्च निश्चितवानित्यर्थः ॥ ३५ ॥

पितृत्वमिति ॥ पुरा काश्यपरूपेण सुरासुराणां पितृत्वमासाद्य पितामहत्वं अखिलपितुर्भगवतो जनकतया तेषां पितुः पितृत्वं प्रतिपत्स्यमानः लप्स्यमानः वसुदेवः अनन्तो विष्णुः गर्भो यस्यास्तां देवीं अवलोक्य अन्येषु विषयान्तरेषु गताभिलाषः अपेताभिलाषस्सन् अतुष्यत् ॥ ३६ ॥

अथ गर्भवर्णनान्तरं जयन्त्या निशीथे भगवदवतारं वक्ष्यन् तदादौ सायंसन्ध्यादिक्रमेण निशीथपर्यन्तं वर्णयितुमुपक्रमते ॥ तापेति ॥ जगतां तापोप-

सुवर्णपीताम्बरवासिनी सा स्वधामसञ्छादितसूर्यदीप्तिः ।
उपासनीया जगतां बभासे मुरद्विषो मूर्तिरिव द्वितीया ॥ ३८

प्रसक्तपातश्चरमाम्बुराशौ रक्तोरुबिंबो रविरस्तशैलात् ।
दिनान्तनागेन दृढप्रणुन्नं मनःशिलाशृङ्गमिवाबभासे ॥ ३९

निमज्जता वारिनिधौ सवित्रा को नाम जायेत करग्रहीता ।
तदेति सम्भावनयैव नूनं दूरादुदक्षेपि कराग्रमुच्चैः ॥ ४०

---

शान्ति सौरतापस्य प्रशमं दिशन्ती ददाना साधुजनैः प्रतीक्ष्या काले सन्ध्याकर्म- कर्तुं परिपालनीया अपरा सन्ध्या अयन्त्यक्तिथेः पश्चिमसन्ध्या। तां प्रकृतां ईदृशीं इत्थंभूतां आसन्नां विश्वपितुः प्रसूतिं संदेदयन्तीव समाजगाम समागतवती। दुष्टनिग्रहार्थं भगवदाविर्भावं निवेदयन्त्यपि जगतां मनस्तापशान्तेस्सवित्री सज्जनस्य प्रतीक्ष्या पूज्या च भवतीति सन्ध्यायास्तादात्म्येनोत्प्रेक्षा ॥ ३७ ॥

सुवर्णेति ॥ शोभनो वर्णस्सुवर्णः सन्ध्यालोहितरूपः तेन पीते ग्रस्ते अम्बरे आकाशे वस्तुं वासङ्कर्तुं शीलमस्या इति तथोक्ता मूर्तिपक्षे सुवर्णमिव पीतं कनकलिप्तं वा अम्बरं अंशुकं वसितुं आच्छादयितुं शीलमस्या इति तथोक्ता। स्वधाम्नास्वतेजसा सञ्छादिता सूर्यस्य दीप्तिर्यया सा । जगतां उपासनीया पूज्या सा सन्ध्या मुरद्विषः नारायणस्य द्वितीया मूर्तिरिव बभासे रराजेत्युत्प्रेक्षा ॥ ३८ ॥

प्रसक्तेति ॥ चरमाम्बुराशौ पश्चिमसमुद्रे प्रसक्तपातः प्रारब्धपतनः रक्तोरुबिंबः अस्तमयप्रत्यासक्त्या अरुणविमलमण्डलः रविः दिनान्तएव नागो गजस्तेन अस्तशैलात् चरमाद्रेः दृढप्रणुन्नं नितान्तं यत्नेन निरस्तं मनःशिलाशृङ्गं गैरिकशिखरमिव आबभासे ॥ ३९ ॥

निमज्जतेति ॥ वारिनिधौ निमज्जता आरब्धासमाप्तनिमज्जनेन सवित्रा (कर्त्रा) को नाम करग्रहीता जायेत स्यादिति सम्भावनयैव तदा तस्मिन्काले करस्य किरणस्यैव हस्तस्य अग्रं उच्चैः दूरात् दूरं उदक्षेपि क्षिप्तं नूनम् ॥ ४० ॥

स्फुरत्प्रभाकेसरमर्कबिम्बं ममज्ज सिन्धौ मकरन्दताम्रम् ।
सन्ध्याकुमार्या गगनाम्बुराशेः क्रीडाहृतं क्षिप्तमिवारविन्दम् ॥
फणामणिप्रेक्ष्यखरांशुबिम्बस्सन्ध्यासुपर्णीमवलोक्य भीतः ।
तापाधिको वासरपन्नगेन्द्रः प्रायेण पातालबिलं विवेश ॥ ४२
प्रदोषरागारुणसूर्यलक्षात् दिशागजो दृप्त इवातिघोरः ।
कालोपनीतं मधुना समेतं मन्ये पयोधिः कवलं न्यभुङ्क्त ॥ ४३
तदा तमः प्रोषितचन्द्रसूर्ये दोषामुखे दूषितसर्वनेत्रम् ।
वियोगिनां शोकमयस्य वह्नेराशागतो धूम इवान्वभावि ॥ ४४

---

स्फुरदिति ॥ स्फुरन्तः भ्राजमानाः प्रभाकेसराः केसरसदृशप्रभाः यस्य तत् । अरविन्दपक्षे स्फुरन्तः प्रभासदृशाः केसराः यस्य तत् । मकरन्दः पुष्परस इव (अन्यत्र मकरन्देन) ताम्रं लोहितम् , अर्कबिम्बं सन्ध्यैव कुमारी तया गगनमेव अम्बुराशिस्तस्मात् क्रीडया आहृतं क्षिप्तं अरविन्दमिव सिन्धौ समुद्रे ममज्ज मज्जति स्म ॥ ४१ ॥

फणेति ॥ फणामणिवत् प्रेक्ष्यं खरांशोः उष्णकिरणस्य बिम्बं मण्डलं यस्य तथोक्तः । तापेन आत्मतापोष्मणा पन्नगेन्द्रपक्षे गरलोष्मणा च अधिकः वासरः दिवसएव पन्नगेन्द्रः फणिराजः प्रायेण नूनं सन्ध्यामेव सुपर्णीं गरुडजननीं अवलोक्य भीतः पातालबिलं नागलोकस्य रन्ध्रं विवेश ॥ ४२ ॥

प्रदोषेति ॥ दृप्तः गर्वितः दिशागजः दिग्गज इव अतिघोरः अत्यन्तं भयङ्करः पयोधिः प्रदोषरागेण अरुणस्य सूर्यस्य लक्षात् व्याजात् कालेन समयेन उपनीतं मधुना क्षौद्रेण समेतं कवलं न्युभुङ्क्त नितरां भुक्तवानिति मन्ये ध्रुवम् । मन्यइति ध्रुवमित्यर्थे निपातप्रतिरूपकमव्ययम् ॥ ४३ ॥

तदेति ॥ तदा तस्मिन् काले प्रोषितौ प्रवासंगतौ चन्द्रसूर्यौ यस्मिंस्तस्मिन् । दोषामुखे रजनीप्रारम्भे दूषितसर्वनेत्रं उपहतसर्वलोचनं तमः वियोगिनां

सतारपुष्पा धृतपल्लवश्रीः प्रच्छायनीरन्ध्रतमःप्रताना ।
विश्वाभिनन्द्या ववृधे तदानीं वैहायसी कापि वसन्तवन्या ॥ ४५

अलक्ष्यत श्यामलमन्तरिक्षं ताराभिरादर्शितमौक्तिकौघम् ।
निवत्स्यतो विश्वपतेरवन्यां कालेन भृत्येन कृतं वितानम् ॥ ४६

अभृङ्गनादप्रतिपन्नमौना निमेषभाजो नियतं वनस्थाः ।
दूरं गते स्वामिनि पुष्करिण्यस्तत्प्राप्तिलाभाय तपो वितेनुः ॥ ४७

---

विरहिणां शोकमयस्य शोकरूपस्य वह्नेः अग्नेः । आशाः दिशः गतः प्राप्तः धूमइव अन्वभावि अनुभूतम् ॥ ४४ ॥

सतारेति ॥ ताराणि नक्षत्राण्येव पुष्पाणि तैस्सह वर्ततइति सतारपुष्पा । धृतपल्लवश्रीः सन्ध्याभ्रतेजसा धृतप्रवालशोभा छायानां समृद्धिः प्रच्छायं तदेव नीरन्ध्रतमःप्रतानं निरन्तरध्वान्तप्रचयः यस्यां सा । विश्वाभिनन्द्या जगदभिनन्दनीया वैहायसी विहायसि आकाशे भवा । कापि आश्चर्यभूता वसन्तवन्या वसन्तकालवनराजिः तदानीं ववृधे वृद्धिं ययौ ॥ ४५ ॥

अलक्ष्यतेति ॥ श्यामलं ताराभिः नक्षत्रैः आदर्शितमौक्तिकौघं प्रदर्शितमुक्ताफलनिकरं अन्तरिक्षं अवन्यां भूमौ निवत्स्यतः निवासङ्करिष्यतः विश्वपतेः कृष्णस्य भृत्येन कालेन कृतं वितानमिव मुक्ताफलसूत्रलब्धपरभागनीलवितानमिव अलक्ष्यत दृष्टम् ॥ ४६ ॥

अभृङ्गेति ॥ स्वामिनि नाथे सूर्ये गते अस्तमिते सति नियतं वनस्थाः सातत्येन जलस्थाः नियमेन काननस्थाश्च 'वनङ्काननीरयोः' इति विश्वः । अभृङ्गनादेन भृङ्गनादाभावेन प्रतिपन्नमौनाः प्राप्तवाङ्नियमाः निमेषभाजः मुकुलीभावभाजः ध्याननिमीलनभाजश्च पुष्करिण्यः पद्मिन्यः तस्य सूर्यस्य प्राप्तेः लाभाय सिद्धये तपः वितेनुः चक्रुः ॥ ४७ ॥

निमीलितानां कमलोत्पलानां निष्पन्नसख्यैरिव चक्रवाकैः ।
विमुक्तभोगैर्विदधे विषण्णैर्विबोधवेलावधिको विलापः ॥ ४८

तमिस्रनीलाम्बरसंवृताङ्गी श्यामा बभौ किञ्चिदतीत्य सन्ध्याम् ।
प्राचीनशैले समयान्निगूढं समुद्यता चन्द्रमिवाभिसर्तुम् ॥ ४९

निशाकरेण प्रतिपन्नसत्वा निक्षिप्तदेहेव पयोधितल्पे ।
जगत्समीक्ष्या जहती च कार्श्यं प्राचीदिशा पाण्डरतामयासीत् ॥

---

निमीलितानामिति ॥ चक्रवाकैः कोकैः (कर्तृभिः) निमीलितानां मुकुलितानां कमलोत्पलानां पद्मेन्दीवराणां निष्पन्नसख्यैः उत्पन्नसौहार्दैः तद्विषयसौहार्दवद्भिरिव विषण्णैः दुःखितैः विमुक्तभोगैः त्यक्तस्त्रीसंभोगैश्च सद्भिः । तेषां कमलोत्पलानां विबोधवेला विकाससमयः प्रभातकालः अवधिः यस्य तदवधिकः । विलापः शोकशब्दः विदधे कृतः । यथा क्वचिदुत्पन्नसौहृदास्तस्य मूर्च्छादिदुरवस्थायां विषण्णास्तांबूलादिभोगान्विहाय तत्प्रबोधपर्यन्तं विलपन्ति तद्वदिति भावः ॥ ४८ ॥

तमिस्रेति ॥ किञ्चित् सन्ध्यां अतीत्य तमिस्रेण तमसैव नीलाम्बरेण नीलवस्त्रेण संवृतं संवरणं अङ्गति गच्छतीति संवृताङ्गी । संवृताङ्गी अवकुण्ठितावयवा च । श्यामा निशैव श्यामा युवतिः । प्राचीनशैले पूर्वाचले प्राक्परिचितशैलरूपसङ्केतस्थाने च समयात् कालादेव समयात् सङ्केतात् निगूढं निलीनं चन्द्रं अभिसर्तुं समुद्यतेव बभौ । अभिसारिकापि प्रकाशभिया किञ्चित् सन्ध्यामतीत्य तमसि नीलाम्बरेणावकुण्ठिता अभिसरतीति भावः ॥ ४९ ॥

निशेति ॥ चन्द्रेण प्रतिपन्नसत्वा प्राप्तगर्भा पयोधौ समुद्र एव तल्पे शय्यायां निक्षिप्तदेहा तत्संश्लेषात् तत्र न्यस्तदेहेव स्थिता जगता समीक्ष्या उदेष्यदिन्दुकरसम्पर्कात् द्रष्टुंयोग्या कृशत्वं जहती अन्धकारावरणेन पूर्वं कार्श्यं प्राप्येव स्थिता अद्य तत्त्यजन्ती प्राचीदिशा प्राचीदिक् पाण्डरतां शुभ्रतां अयासीत् अगमत् । प्राप्तगर्भा तल्पे न्यस्तदेहा कान्त्यतिशयाज्जगतां दृष्टियोग्या कार्श्यं मुञ्चन्ती च शुभ्रतां गच्छतीति भावः ॥ ५० ॥

तमः प्रसङ्गेन विमुच्यमाना गौरप्रभा गोत्रभिदाभिनन्द्या ।
विधूदयारम्भविशेषदृश्या प्राचीदिशाऽभासत देवकीव ॥ ५१

अपत्यलाभं यदुवीरपत्न्याः महोदधौ मग्नसमुत्थितेन ।
तद्वंशमान्येन समीक्ष्य पूर्वं प्राप्तं प्रतीतेन पुरोधसेव ॥ ५२

क्ष्वेलोपमे सन्तमसे निरस्ते सोमं सुधास्तोममिवोद्वमन्ती ।
दुग्धोदवेलेव दुदोह लक्ष्मीमाशामनोज्ञाममरेन्द्रमान्या ॥ ५३

---

**तमइति** ॥ तमःप्रसङ्गेन अन्धकारसंपर्केण पक्षे भगवत्प्रवेशात् तमोगुणस्य पापस्य शोकस्य वा संपर्केण विमुच्यमाना । गौरप्रभा पाण्डरशोभा । गोत्रभिदा अचलभिदा शक्रेण अभिनन्द्या । तदीयत्वात् । पक्षे देवकार्यार्थमवतरिष्यतः कृष्णस्य गर्भे भरणात् । विधोः चन्द्रस्य उदयारम्भेण विशेषदृश्या कृत्स्नतमोनिरासादतिशयेन द्रष्टुं योग्या पक्षे विधोः कृष्णस्याविर्भावारम्भादतिशयेन रमणीया प्राचीदिशा देवकीव अभासत अराजत ॥ ५१ ॥

**अपत्येति** ॥ यदुषु यदुवंश्येषु वीरः श्रेष्ठो वसुदेवः तस्य पत्न्याः अपत्यलाभं भविष्यन्तं समीक्ष्य आलोच्य महोदधौ समुद्रे मग्नसमुत्थितेन निमज्योत्थितेन तद्वंशमान्येन यदुवंश्यकूटस्थतया पूज्येन चन्द्रमसा प्रतीतेन सादरेण पुरोहितेनेव पूर्वं अपत्योत्पत्तेः प्रागेव प्राप्तं उदयाय प्रत्यासन्नम् ॥ ५२ ॥

**क्ष्वेलेति** ॥ क्ष्वेलोपमे गरलसदृशे सन्तमसे विष्वक्तते तमसि निरस्ते प्रथममाविर्भूतैः किरणांकुरैः निराकृते सति सुधास्तोमं अमृतपुञ्जमिव सोमं उद्वमन्ती उद्गिरन्ती आविर्भावयन्तीति यावत् । अमरेन्द्रस्य मान्या आशा प्राची दुग्धोदस्य क्षीरसमुद्रस्य वेला मथनकालीना जलवृद्धिरिव 'वेलाब्धितीराम्बुवृद्ध्योः' इति रत्नमाला । मनोज्ञां रम्याम् । लक्ष्मीं शोभामेव लोकमातरं दुदोह जनयामासेत्यर्थः ॥ ५३ ॥

तमस्समाक्रान्तिवशेन पूर्वं जज्ञे निमग्नैरिव भूतधात्र्याम् ।
ततस्तुषारांशुकरावगूढैरुत्तभ्यमानैरिव शैलशृङ्गैः ॥ ५४

दिशस्तदानीमवनीधराणां सगैरिकैः पारदपङ्कलेपैः ।
चकाशिरे चन्द्रमसो मयूखैः पञ्चायुधस्येव शरैः प्रदीप्तैः ॥ ५५

समुन्नमन्ती कुटिलायतात्मा शशाङ्कलेखोदयदृश्यकोटिः ।
वियोगिचेतोलवने प्रवीणा कामोद्यता काञ्चनशङ्कुलेव ॥ ५६

तमांसि दुर्वारबलस्सकालः प्रायो विलोप्तुं सहसा दिशाञ्च ।
मनांसि कामश्च मनस्विनीनां प्रायुङ्क्त शैत्याधिकमर्धचन्द्रम् ॥

---

तम इति ॥ पूर्वं चन्द्रोदयारम्भात्प्राक् शैलशृङ्गैः तमस्समाक्रान्तिवशेन अन्धकाराक्रमणायत्ततया भूतधात्र्यां भूमौ निमग्नैरिव जज्ञे जातम् । जनिधातोर्भावे लिट् ' ततश्चन्द्रोदयारम्भे तु तुषारांशुकरावगूढैः चन्द्रकिरणावकुण्ठितैः उत्तभ्यमानैः पुनरुन्मज्यमानैरिव जज्ञे । पूर्वमन्धकारावृतत्वेनादर्शनात्पर्वतशिखराणि भूमौ निमग्नानीव । तदुदयारम्भे भूमौ पतद्भिः किरणैरुपरिभागमास्थ्य प्रकाश्यमानानि तान्युत्तम्भनेन पुनरुन्मज्जन्तीवेत्युत्प्रेक्षाद्वयम् ॥ ५४ ॥

दिश इति ॥ दिशः तदानीं अवनीधराणां पर्वतानां सगैरिकैः पारदपङ्कलेपैः कनकसहितरसकर्दमालेपैः तद्वदारञ्जकैः । गैरिकङ्कनके धातौ' इति 'रसस्तुपारदे सूदे' इति च विश्वः'। चन्द्रमसः मयूखैः किरणैः प्रदीप्तैः प्रज्वलितैः पञ्चायुधस्य मन्मथस्य शरैरिव चकाशिरे ॥ ५५ ॥

समिति ॥ समुन्नमन्ती समुद्गच्छन्ती कुटिलायतात्मा वक्रदीर्घाकारा शशांकस्य चन्द्रस्य लेखा उदयदृश्या प्रथमदृश्या कोटिः अग्रं यस्यास्सा । कामेनोद्यता मन्मथेन धृता वियोगिनां विरहिजनानां चेतसः मनसः लवने खण्डने प्रवीणा समर्था काञ्चनशङ्कुला कनकमयी लवनशस्त्रीव चकाश प्रकाशते स्म॥ ५६ ॥

तमांसीति ॥ दुःखेन वार्यत इति दुर्वारं बलं यस्य सः । कालः समयः कामः मन्मथश्च क्रमेण दिशां तमांसि मनस्विनीनां मानिनीनां मनांसि च प्रायः

करेण सङ्कोचितपुष्करेण मदप्रतिच्छन्दकलङ्कभूमा ।
क्षिप्त्वा तमश्शैवलमुन्ममज्ज मग्नो दिशानाग इवेन्दुरब्धेः ॥ ५८
मदोदयाताम्रकपोलभासा शक्रस्य काष्ठा शशिना चकासे ।
उदेयुषा व्यञ्जयितुं त्रिलोकीं नाथस्य सा नाभिरिवाम्बुजेन ॥
समीपतस्सन्तमसाम्बुराशेर्बभार शङ्खाकृतिरिन्दुबिम्बः ।
पित्तोपरागादिव पीतिमानं दोषाविलप्रोषितदृष्टिदत्तात् ॥ ६०

---

प्रायेण सहसा सद्यः विलोप्तुं विनाशयितुं शैत्येन शीतत्वेन उत्तेजितत्वेन अधिकम् । अर्धश्चासौ चन्द्रश्च तम् । अर्धचन्द्ररेखां आयुधविशेषञ्च प्रायुङ्क प्रयुङ्क्ते स्म । 'अर्धचन्द्रस्तु चन्द्रके । गलहस्तेबाणभेदे' इति विश्वः ॥ ५७ ॥

**करेणेति** ॥ मदप्रतिच्छन्दः मदजलसदृशः कलङ्कस्य भूमा बाहुल्यं यस्य सः इन्दुः सङ्कोचितानि पुष्कराणि पद्मानि येन तेन । करेण किरणेन पक्षे सङ्कोचितस्वाग्रेण हस्तेन 'पुष्करङ्करिहस्ताग्रे बलिहस्तांशवः कराः' इत्यमरः । तमश्शैवलं शैवलसदृशन्तमः क्षिप्त्वा निरस्य मग्नः दिशानागः दिग्गजइव अब्धेः उन्ममज्ज उत्तस्थौ ॥ ५८ ॥

**मदेति** ॥ शक्रस्य काष्ठा इन्द्रस्य दिक् त्रयाणां लोकानां समाहारस्त्रिलोकी तां व्यञ्जयितुं प्रकाशयितुं उदेयुषा उदितवता मदोदयाताम्रकपोलभासा तत्क्षणोदितत्वादासवादिमदजननारुणगण्डतुल्यरुचा । शशिना नाथस्य स्वामिनो नारायणस्य सा प्रसिद्धा नाभिः अम्बुजेनैव चकाशे । भगवन्नाभीपद्ममपि चतुर्मुखोत्पादनद्वारा त्रिलोकीं व्यञ्जयितुं उत्पादयितुं उदितमाताम्रञ्च ॥ ५९॥

**समीपत इति** ॥ सन्तमसं विष्वक्तमः अम्बुराशिरिव तस्य समीपतः समीपे शङ्खस्याकृतिरिवाकृतिर्यस्य शङ्खाकृतिः इदुबिम्बः । दोषा रात्रिः तत्र आविला प्रियाविरहदुःखोद्गतबाष्पकलुषा (दोषेण प्रमाप्रतिबन्धकेन विकृता च) तथाभूतया प्रोषितानां प्रवासिनां दृष्ट्या दत्तात् आहितात् पित्तोपरागात् पित्तद्रव्यसम्पर्कादिव पीतिमानं पितवर्णं बभार । दुष्टलोचनानां पुंसां लोचनरश्मिभिर्निर्गत्य विषयान्व्याप्नुवद्भिः पित्तद्रव्यस्य पीतिम्नावकुण्ठनात् तेषु पीतिमभ्रम इति तान्त्रिकप्रक्रिययेति भावः ॥ ६० ॥

कृशोदरीलोचनकृष्णलक्ष्मा रात्र्या समिद्धोदयराग इन्दुः ।
कस्तूरिकाकुङ्कुमचित्रितात्मा कर्पूरविन्यास इवान्वभावि ॥ ६१

प्रसादमन्तः करणस्य दाता प्रत्यक्षयन्विश्वमिदं प्रकाशैः ।
तमश्च रागश्च विधूय चन्द्रः सन् मोदनं सत्वमिवोल्ललास ॥ ६२

निशाकरो वारिनिधिस्वनानां निष्पादकः कुन्दरुचिश्चकाशे ।
उदेष्यतश्चक्रभृतो नियोगात्प्रादुर्भवन् प्रागिव पाञ्चजन्यः ॥ ६३

मृगेण निष्पन्नमृगाजिनश्रीः स्वपादविक्षेपमितान्तरिक्षः ।
मुरद्विषो वामनमूर्तिभाजः पर्यायतामन्वगमच्छशाङ्कः ॥ ६४

---

कृशेति ॥ कृशोदरीणां लोचनमिव कृष्णं लक्ष्म चिह्नं यस्य सः। समिद्धोदयरागः दीप्यमानोदयारुणिमा। इन्दुः। कस्तूरिकाकुङ्कुमाभ्यां चित्रितात्मा चित्रीकृताकृतिः। रात्र्या कर्पूरतिलकविन्यास इव अन्वभावि अनुभूतः ॥ ६१ ॥

प्रसादमिति ॥ अन्तः करणस्य प्रसादं दाता आनन्ददानशीलः। ताच्छील्यतृन्नन्तत्वेनषष्ठीनिषेधात् द्वितीया। इदं विश्वं प्रकाशैः आलोकैः प्रत्यक्षयन् प्रत्यक्षंकुर्वन् सचन्द्रः। तमः अन्धकारञ्च। रागं उदयारुण्यञ्च विधूय त्यक्त्वा सन्। मोदनं आनन्दकरं सत्वमिव शुद्धसत्वमिव उल्ललास। बभौ। सत्वमपि। तमस्तमोगुणं रागं रजोगुणञ्च विधूय कदाचिद्विवर्धते। तथा विवृद्धञ्च सत्वं मनसः प्रसादं ऐकाग्रययोस्यतान्ददाति। विश्वञ्च प्रकाशैर्ज्ञानैः प्रत्यक्षयति ॥ ६२ ॥

निशेति ॥ कुन्दस्य माघ्यपुष्पस्य रुचिरिव रुचिः कान्तिर्यस्य सः कुन्दरुचिः वारिनिधिस्वनानां क्षोभणेन समुद्रघोषाणां निष्पादकः निशाकरः उदेष्यतः चक्रभृतः कृष्णस्य नियोगात्। प्राक् तत्प्रादुर्भावात्पूर्वं प्रादुर्भवन् पाञ्चजन्यः तदीयशङ्ख इव चकाशे। पाञ्चजन्यो धवलत्वात्कुन्दरुचिः कुन्दे मुकुन्दे रुचिरभिरतिर्भक्तिर्यस्येति वा वारिनिधिस्वनानां साद्दश्यव्यपदेशेन तत्सदृशानां गम्भीरस्वनानां निष्पादकश्च भवति ॥ ६३ ॥

मृगेणेति ॥ मृगेण निष्पन्ना मृगाजिनस्य श्रीः शोभा यस्य सः। स्वपादानां स्वकिरणानां विक्षेपेण परितः प्रसारेण मितं लोकैः प्रत्यक्षेण प्रमितं अन्तरिक्षं

जिगाय शङ्खाश्रितशैवलाभश्चारुद्युतेश्चन्द्रमसः कलङ्कः ।
उदीयमानस्य महोर्मियोगात्सामिच्युतं सागरमूलपङ्कम् ॥ ६५

उदेत्य तुङ्गादुदयाद्रिशृङ्गात्तमोगजानग्रकरेण निघ्नन् ।
निशाकरस्तन्मदलेपलक्ष्मा सिताभिशुर्सिंहदशामयासीत् ॥ ६६

निशीथलक्ष्म्या इव पुण्डरीकं निर्वेशसिन्धोरिव फेनचक्रम् ।
तारामणीनामिव सूतिशुक्तिं तमन्ववैक्षन्त विलासतन्त्राः ॥ ६७

---

यस्य सः । शशाङ्कः । वामनमूर्तिभाजः सुरद्विषः ब्रह्मचर्याभिनयेन मृगाजिनन्धारयतः स्वचरणविक्षेपेण परिमितगगनस्य पर्यायतां सादृश्यं अन्वगमत् ॥ ६४ ॥

जिगायेति ॥ शङ्खाश्रितशैवलाभः शङ्खमाश्रितस्य शैवलस्य सदृशी आभा यस्य सः । चारुद्युतेः मनोज्ञप्रभस्य चन्द्रमसः । कलङ्कः उदीयमानस्य पाताळात् समुद्ररन्ध्रमार्गेणोद्यतः तस्य महोर्मिभिः कल्लोलैः योगात् सामिच्युतं अर्धं गलितं सागरस्य मूलपङ्कं जिगाय जयति स्मेत्युत्प्रेक्षा ॥ ६५ ॥

उदेत्येति ॥ तुङ्गात् उदयाद्रेः शृङ्गात् उदेत्य उद्गत्य तमांस्येव गजान् अग्रकरेण अग्रकिरणेनैवाग्रहस्तेन निघ्नन् । तेषां मदस्य लेप इव स्थितं लक्ष्म यस्य सः तन्मदलेपलक्ष्मा । सिताभिशुः शुभ्रमयूखः (वल्मिकवल्मीकवत् अभीशुरिति ह्रस्वमध्यो दीर्घमध्यश्च) निशाकरः । सिंहस्य दशां अवस्थां अयासीत् अगमत् ॥ ६६ ॥

निशीथेति ॥ विलासस्तन्त्रं प्रधानं येषान्ते विलासतन्त्राः विलासप्रधाना विलासिनः । तं चन्द्रं निशीथस्य अर्धरात्रस्य लक्ष्मीश्शोभैव कमला तस्याः पुण्डरीकमिव निर्वेशस्सुखभोगएव सिन्धुस्समुद्रस्तस्य फेनचक्रं फेनपुञ्जमिव । ताराः नक्षत्राण्येव मणयस्तेषां सूतेः उत्पत्तेः शुक्तिमिव । अन्ववैक्षन्त उत्प्रैक्ष्यन्तेत्यर्थः ॥ ६७ ॥

उदारतारागणबुद्बुदौघश्चन्द्रेण सम्पन्नसुधाप्रसूतिः ।
अशेषदृश्यामधिगम्य लक्ष्मीमालोकदुग्धोदधिराबभासे ॥ ६८

प्रकाशयन्विश्वमिदं यथावच्चन्द्रोदयोद्दीपितसौम्यतारः ।
दैवान्निशीथो जगतः प्रभूतादासीदिवान्धस्य सदृष्टिलाभः ॥ ६९

विशोधितात्सागरवृद्धिहेतोर्विष्वङ्मुखी विष्णुपदात्सरन्ती ।
तमोमयीं सूर्यसुतां निगीर्य ज्योत्स्नानदी शोणमपि व्यमुञ्चत् ॥

---

उदारेति ॥ उदारो महान् तारागणएव बुद्बुदौघः स्थासकसमूहः यस्य स तथोक्तः । "बुद्बुदस्थासकौ समौ" इति यादवः । चन्द्रेण सम्पन्ना सुधाप्रसूतिर्येन सः । आलोकश्चन्द्रप्रकाशएव दुग्धोदधिः अशेषदृश्यां विश्वरमणीयां लक्ष्मीं शोभामेव कमलां अभिगम्य लब्ध्वा आबभासे ॥ ६८ ॥

प्रकाशयन्निति ॥ विश्वं सकलं इदं वस्तुजातं यथावत् सम्यक् प्रकाशयन् । चन्द्रस्य उदयेन उद्दीपिताः परिष्कृताः सौम्याः मनोज्ञाः ताराः यस्मिन् सः निशीथः अर्धरात्रः जगतो लोकस्य प्रभूतात् प्रचुरात् दैवात् अदृष्टात् अन्धस्य अपगतचक्षुषः दृष्टिलाभइव आसीत् । दृष्टिपक्षे चन्द्रोदयाख्येन वैद्यसिद्धेन गुलिकाविशेषेण उद्दीपिता उत्तेजिता रूपग्रहणयोग्यत्वं प्रापिता सौम्या काशपटलादिविगमादनुग्रा तारा कनीनिका यस्येति तद्विशेषणयोजना ॥ ६९ ॥

विशोधितादिति ॥ विशोधितात् तमोनिरसनेन संमृष्टात् विष्णुपदात् आकाशात् सागरस्य वृद्धेरेव हेतोः सागरवृद्ध्यर्थमित्यर्थः । विष्वङ्मुखी सर्वतोमुखी क्षरन्ती प्रवहन्ती ज्योत्स्नैव नदी गङ्गा तमोमयीं अन्धकाररूपां सूर्यसुतां यमुनां निगीर्य ग्रसित्वा । शोणं उदयरागमपि व्यमुञ्चत् गङ्गापि शोधितात् चतुर्मुखेन क्षालितात् विष्णोश्चरणात् सागरपूरणार्थं विष्वङ्मुखी मेरोः पुरस्थितस्य ब्रह्मपुरस्य चतसृषु दिक्षु गङ्गालकनन्दाचक्षुर्भद्रेति च चतुर्धा विभिद्य सर्वतोमुखतया क्षरन्ती सती यमुनासङ्गमानन्तरं तामुत्तरत्र अस्तामिव कृत्वा स्वयं प्राधान्येन प्रवहन्ती तदनन्तरं शोणनदेन संयुज्य तमपि समुद्रसमीरे विसृज्य गच्छतीति स्थितिः ॥ ७० ॥

प्रियामुखैस्तोयमधु प्रविष्टं पीत्वा नवं प्रीतइवाम्बुराशिः ।
समेत्य चन्द्रद्युतिनर्तकीभिस्तरङ्गितं ताण्डवमाततान ॥ ७१

कलङ्कचित्रीकृतमावभासे तमस्समध्यासितसत्वकल्पम् ।
अशुष्कशैवालमिवार्धदृश्यं सिद्धापगासैकतमिन्दुखण्डम् ॥ ७२

स्वमध्यसम्पन्नविशुद्धधामा श्यामा च सा देवकनन्दनी च ।
तमः क्षिपन्त्यौ जगतां त्रयाणामन्योन्यसंवादमिवान्वभूताम् ॥ ७३

शाखावकाशेषु कृतप्रवेशैः चन्द्रातपैराश्रितपारकृत्यैः ।
हतावशिष्टानि तमांसि हन्तुं स्थानं तदाक्रान्तमसूययेव ॥ ७४

---

प्रियेति ॥ अम्बुराशिः समुद्रः प्रियामुखैः नदीस्रोतोभिः 'मुखन्निस्सरणे वक्त्रे' इति विश्वः । प्रविष्टं दत्तं नवं तोयमेव मधु मद्यं पीत्वा प्रीतइव चन्द्रद्युतिभिरेव नर्तकीभिः समेत्य तरङ्गितं सञ्जाततरङ्गं प्रवृत्तं ताण्डवं उद्धतं नटनं आततान विस्तारयामास ॥ ७१ ॥

कलङ्केति ॥ कलङ्केन चित्रीकृतं पूर्वं कलङ्कस्योदयरागाभिभूतत्वादचित्रं तदपगमे स्फुटेन तेन चित्रीकृतं अतएव तमस्समध्यासितसत्वकल्पं सत्वतमसोस्सितासितरूपत्वात्तमोगुणाधिष्ठितसत्वगुणतुल्यमित्यर्थः । एवंभूतं इन्दुखण्डं अष्टमीन्दुशकलं कर्तृ अशुष्कं शैवालं यस्मिन् तत् अर्धे अर्धभागे दृश्यं सिद्धापगासैकतं आकाशगङ्गापुलिनमिव आबभासे रराज ॥ ७२ ॥

स्वेति ॥ स्वस्मिन् आत्मीये मध्ये अर्धरात्रे सम्पन्नं पूर्णं विशुद्धं शुभ्रं धाम चन्द्रज्योतिर्यस्यां सा देवकीपक्षे स्वमध्ये स्वावलग्ने सम्पन्नं निखिलहेयगुणरहितं परं ज्योतिर्यस्यास्सा श्यामा निशा सा देवकनन्दनी देवकी च । त्रयाणां जगतां तमः अन्धकारं शोकञ्च क्षिपन्त्यौ निरस्यन्त्यौ उभे अन्योन्यसंवादं परस्परसादृश्यं अन्वभूतामिव अगच्छतामित्यर्थः ॥ ७३ ॥

शाखेति ॥ शाखानां विटपानामेव वेदशाखानां अवकाशेषु रन्ध्रेषु अन्तरेषु कृतप्रवेशैः चन्द्रातपैः चन्द्रस्य प्रकाशैः एवं आश्रितपारकृत्यैः शास्त्रपारङ्गतै-

परागकृतध्वान्तनिकायपङ्कैः पर्याप्ततारागणफेनपुञ्जैः ।
यशः प्रवाहैरिव चन्द्रपादैरशोभत द्यौरसमायुधस्य ॥ ७५
ददानया दिक्सरितां प्रसादं प्रसक्तहंसागमया स्वकान्त्या ।
अपाकृतध्वान्तघनप्रवृत्त्या शरत्त्विषा चन्द्रिकया बभासे ॥ ७६
कलावता कामविहारनाट्ये कालोचितं कल्पयतेव नर्म ।
अमोघमायापलितङ्करण्यः प्रायो दिशां दीधितयः प्रयुक्ताः ॥ ७७

---

स्सद्भिः । हतावशिष्टानि चन्द्रेण हतानां तमसामवशिष्टानि तमांसि अन्धकारानेवाज्ञानानि हन्तुं तैरेव श्लिष्टतमोभिः, आक्रान्तं स्थानं तरुषण्डमूलरूपं अमृग्यतेव मार्गितमिव ॥ ७४ ॥

परेति ॥ द्यौः अन्तरिक्षं पराकृतध्वान्तनिकायपङ्कैः निरस्ततमस्समूहकर्दमैः पर्याप्ततारागणफेनपुञ्जैः परिपूर्णनक्षत्रगणडिण्डीरनिवहैः चन्द्रस्य पादैः किरणैः असमायुधस्य अयुग्मायुधस्य पञ्चशरस्य यशः प्रवाहैरिव अशोभत ॥ ७५ ॥

ददानयेति ॥ दिशां सरितां नदीनामिव प्रसादं नैर्मल्यं ददानया ददत्या स्वकान्त्या स्वशोभया प्रसक्तहंसागमया हंसागमनशङ्कावहस्वशोभयेति यावत् । शरत्पक्षे स्वशोभादर्शनेन सञ्जातहंसागमनयेत्यर्थः । अपाकृता निरस्ता ध्वान्तानां तमसां घानानां मेघानां प्रवृत्तिः प्रवेशः यया तया अतएव शरत्त्विषा शरत्प्रभासमानप्रभया शरत्तुल्ययेति यावत् । चन्द्रिकया बभासे ॥ भावे लिट् ॥ ७६ ॥

कलेति ॥ कलावता चन्द्रेणैव नाट्यशिल्पवता सूत्रधारेण कामविहारे यूनां मन्मथविहारएव नाट्ये कालोचितं नर्म समयोचितं हास्यरसं कल्पयता सम्पादयतेव दिशां अमोघमायापलितङ्करण्यः पलितं जरसा शौक्ल्यं तद्वन्तोपि पलिताः मायया पलिताः मिथ्यापलिता । अमायापलिताः मायापलिताः क्रियन्त आभिरिति मायापलितङ्करण्यः अमोघाः अवितथारम्भाश्च ताः मायापलितङ्करण्यश्चेति तथोक्ताः दीधितयः मरीचयः (नर्तक्यश्च) प्रायः बाहुल्येन भृशं प्रयुक्ताः विस्तारिताः अभिनीताश्च । अत्र कल्पयतेति हेतौ शतृप्रत्ययः । ततश्चार्जयन्वसतीत्यत्रार्जनवत्फलस्यैवोद्देश्यतया हास्यरसङ्कल्पयितुमेवेति पर्यवसितोऽर्थः ॥ ७७ ॥

कदम्बमालाभिरधीतलास्यः कल्याणसम्भूतिरभूत्प्रजानाम् ।
प्रियोदयस्फीतरुचो रजन्यास्सन्तोषनिश्वासनिभस्समीरः ॥ ७८

प्रायेण हंसैरवधूतसङ्गा चारुस्मिता सम्भृतभृङ्गनादा ।
सर्वोपभोग्ये समये प्रसुप्तं कुमुद्वती कोकनदं जहास ॥ ७९

कलङ्कलक्ष्मेण समैक्षि काचित्कस्तूरिकापत्रविशेषकान्तिः ।
सुधांशुबिम्बव्यपदेशदृश्ये मुग्धे रजन्या मुखपुण्डरीके ॥ ८०

---

**कदम्बेति** ॥ कदम्बमालाभिः नीपराजिभिः अधीतं पठितं लास्यं नर्तनं यस्मात्तथोक्तः । एतेन मान्द्यसौरभे दर्शिते । शैत्यन्तु चन्द्रिकासम्पर्कात्सिद्धम् । प्रजानां जनानां कल्याणसम्भूतिः आनन्दोदयः तद्धेतुत्वात्तद्व्यपदेशः प्रियस्य चन्द्रस्य उदयेन स्फीतरुचः सर्वत्र चन्द्रिकाप्रसरणात् प्रवृद्धकान्तेः रजन्याः रात्रेः सन्तोषनिश्वासनिभः आनन्दनिश्वास इव स्थितः समीरः वायुः अभूत् । यथा पत्युरभ्युदयं दृष्ट्वा प्रवृद्धमुखकान्तेः प्रियायास्सन्तोषनिश्वासो भवति तद्वदिति भावः ॥ ७८ ॥

**प्रायेणेति** ॥ हंसैर्मरालैः अवधूतसङ्गा त्यक्तसङ्गा हंसाः कमलिन्यामेव रज्यन्ति न तु कुमुद्वत्यामिति भावः । चारुस्मिता रम्यविकासा सम्भृतभृङ्गनादा सम्पादितभ्रमरस्वना कुमुद्वती कुमुदिनी सर्वेषामुपभोग्ये उपभोगार्हे समये निशीथे प्रसुप्तं निमीलितं कोकनदं अरविन्दं प्रायेण जहास हसति स्मेव । यथा हंसैर्योगिभिर्वीतरागैरवधूतसङ्गा चारुमन्दहासा स्वकीयोपहाससमये सम्भृतसहोपहासिविटशब्दा वेश्या सर्वोपभोग्ये समये वनितारसानभिज्ञतया प्रसुप्तं जनमुपहसति तद्वदिति भावः ॥ ७९ ॥

**कलङ्केति** ॥ सुधांशुबिम्बव्यपदेशेन चन्द्रमण्डलव्याजेन दृश्ये दृष्टिगोचरे मुग्धे सुन्दरे रजन्याः मुखं पुण्डरीकमिव तस्मिन् कलङ्कलक्ष्मेण अङ्कव्याजेन काचित् कस्तूरिकायाः पात्रविशेषस्य कस्तूरिकारचितचित्रविशेषस्य कान्तिश्शोभा समैक्षि अदर्शि । इहाष्टम्यां पूर्णचन्द्रो वर्णित इति न विरोधश्शङ्कार्हः काव्यस्य वर्णनामात्रपरत्वेन तदनादरणात् ॥ ८० ॥

तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम् ।
शशाङ्कसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः ॥ ८१

तमस्तरङ्गानवसादयन्त्या समेयुषी चन्द्रिकया महत्या ।
श्यामा बभौ सान्द्रनवोत्पलश्रीः सुरस्रवन्त्येव कलिन्दकन्या ॥

स्वविप्रयोगव्यसनात्सुधांशुर्भृङ्गापदेशेन कुमुद्वतीभिः ।
प्रच्यावयामास विषं निपीतं सुधाभिराप्लाव्य करस्थिताभिः ॥

चकाशिरे पत्रकलासमृद्ध्या व्योमोपमे वारिणि कैरवाणि ।
कलङ्कदृश्यभ्रमराणि काले नाथेन साधर्म्यमुपागतानि ॥ ८४

---

तलेष्विति ॥ तदा मारुतेन कम्पितानां महीरुहाणां तलेषु अधः प्रदेशेषु छायाः शशाङ्केनैव सिंहेन लूनाकृतीनां कृत्तगात्राणां तमसामेव गजानां गात्रखण्डा इव अवेपन्त अकम्पन्त । सद्यः कृत्ता गात्रखण्डाः क्षणं कम्पन्ते ॥ ८१ ॥

तम इति ॥ तमांसि तरङ्गा इव तान् अवसादयन्त्या अभिभवन्त्या चन्द्रिकया समेयुषी सङ्गता सान्द्रनवोत्पलश्रीः निबिडनवकुवलयशोभा श्यामा रात्रिः महत्या अतएव स्वकीयतरङ्गानभिभवन्त्या सुरस्रवन्त्या गङ्गया सङ्गता नवेन्दीवरश्यामा कलिन्दकन्या यमुनेव बभौ भाति स्म ॥ ८२ ॥

स्वेति ॥ सुधांशुः चन्द्रः कुमुद्वतीभिः कुमुदिनीभिः स्वविप्रयोगव्यसनात् स्वविश्लेषदुःखात् भृङ्गापदेशेन भ्रमरव्याजेन निपीतं विषं करे किरणे एव हस्ते स्थिताभिः सुधाभिः अमृतैः आप्लाव्य कुमुद्वतीरासिच्य प्रच्यावयामास प्रच्यावयति स्म ॥ ८३ ॥

चकाशिर इति ॥ व्योमोपमे गगनसदृशे वारिणि जले पत्राणि दलानि कला इव तासां समृद्ध्योपलक्षितानि कलङ्क इव दृश्यः भ्रमरः येषु तानि कैरवाणि कुमुदानि काले निशासमये स्वनाथेन व्योमानि कलासमृद्धिमता कलङ्कचित्रितेन च चन्द्रेण साधर्म्यं सादृश्यं उपागतानीव प्राप्तानीव चकाशिरे प्रकाशन्ते स्म ॥ ८४ ॥

सरिन्मुखोपाहृतमम्बुराशिः पीत्वेव तोयं मधु जातहर्षः ।
चकार चन्द्रप्रतियातनानां करग्रहैःकामपि रासलीलाम् ॥ ८५

प्रसादभाजोरुभयोरभूतामुभावनिर्धार्यमिथोविशेषौ ।
नभःस्थले शीतरुचिस्सतारे सकैरवे तत्प्रतिमा च तोये ॥ ८६

नभस्तुषारांशुमयूखयोगात्तमिस्रया मोक्षमविन्दतेव ।
अतृष्यतस्तत्वविदो निशायामन्तर्मुखञ्चित्तमिवात्मयोगात् ॥ ८७

---

सरिदिति ॥ अम्बुराशिः समुद्रः सरिन्मुखैः नदीस्रोतोभिः उपाहृतं दत्तं तोयं जलमेव मधु मद्यं पीत्वा जातहर्षः उत्पन्नसन्तोषइव चन्द्रस्य प्रतियातनानां प्रतिच्छायानां 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना । प्रतिच्छाया' इत्यमरः । करग्रहैः किरणानामेव हस्तानां ग्रहणैः कामपि आश्चर्यभूतां रासलीलां उभयतो वनिताकरग्रहसाध्यमण्डलनृत्तविशेषरूपां लीलां चकार ॥ ८५ ॥

प्रसादेति ॥ प्रसादं वैमल्यं भजमानयोः उभयोरधिकरणयोः उभौ अनिर्धार्यमिथोविशेषौ अनिर्धारणीयपरस्परभेदौ अभूतां । कयोरुभयोः कावुभौ तत्राह नभइति । सतारे नक्षत्रसहिते नभः स्थले गगनतले शीतरुचिश्चन्द्रः सकैरवे कुमुदसहिते तोये जले तस्य चन्द्रस्य प्रतिमा प्रतिबिम्बश्च ॥ ८६ ॥

नभ इति ॥ नभः गगनं तुषारांशुमयूखयोगात् चन्द्रकिरणसम्पर्कात् तमिस्रया अन्धकारेणैव अविद्यया अज्ञानेनेव मोक्षं अविन्दत अलभत । अतृष्यतः तृष्णारहितस्य तत्त्वविदः तत्वज्ञस्य निशायां रात्रौ अन्तर्मुखं बहिरर्थासङ्गहेत्वभावात् प्रत्यगभिमुखं चित्तमिव तद्यथा आत्मयोगात् योगाभ्यासात् अविद्यया मुच्यते तद्वदित्यर्थः । विरक्तस्य तत्वविदोऽपि चित्तं निशायां यथा ध्यानाभिमुखं प्रसीदति तथेति भावः ॥ ८७ ॥

सहोदिता चन्द्रमसा बभासे ज्योत्स्नापयोधेरुपजातरागा ।
तदातने सञ्जननेऽपि शौरेः सहायिनी सागरसम्भवेव ॥ ८८
प्रबुद्धताराकुमुदाब्धिचन्द्रे निश्शेषनिद्राणजने निशीथे ।
स तादृशो देवपतेः प्रसूतिं पुष्यन् बभौ पुण्यतमो मुहूर्तः ॥ ८९
भागेन पूर्वेन तमोमयेन प्रकाशपूर्णेन च पश्चिमेन ।
तदा निशीथस्स सतां प्रसत्त्यै संसारमुक्त्योरिव सन्धिरासीत् ॥

---

**सहेति** ॥ चन्द्रमसा सह पयोधेस्समुद्रात् उदिता उत्पन्ना उपजातरागा सञ्जातोदयरागा ज्योत्स्ना चन्द्रिका तदा भवं तदातनं तस्मिन् । सञ्जनने अवतारेऽपि शौरेः कृष्णस्य सहायिनी सहायभूता सागरसम्भवा लक्ष्मीरिव बभासे रराज । लक्ष्मीरपि समुद्रादुदिता भगवति सञ्जातानुरागा च तस्याश्च "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषानपायिनी" इति भगवदवतारेषु सहावतारः प्रसिद्धः ॥ ८८ ॥

**प्रबुद्धेति** ॥ प्रबुद्धाः (ताराणां चन्द्रस्य च प्रबोधो दीप्यमानता कुमुदानां विकासः अब्धीनां क्षोभः) तादृशं प्रबोधं प्राप्ताः ताराकुमुदाब्धिचन्द्रा यस्मिन् तस्मिन् । निश्शेषनिद्राणजने सुप्ताखिलजने निशीथे अर्धरात्रे सः तादृशः देवपतेः कृष्णस्य प्रसूतिं अवतारं पुष्यन् सम्पादयन् पुण्यतमः व्रतपराणां परमश्रेयोहेतुत्वात् अतिशयेन पुण्यः मुहूर्तः कियान् कालः बभौ । 'मुहूर्तः स्वल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति शब्दार्णवः । स इति तत्कालस्य पुराणादिषु स्वरूपप्रसिद्धिं द्योतयति । तादृश इति 'यद्बाल्ये यच्च कौमारे स्थाविरे यच्च पातकम् । तत्क्षालयति गोविन्दस्तिथौ तस्यां विभावितः' इति पापहन्तृत्वप्रमुखप्रकारप्रसिद्धिं द्योतयतीति न पौनरुक्त्यम् ॥ ८९ ॥

**भागेनेति** ॥ तदा तस्मिन् भगवदवतारसमये तमोमयेन अन्धकारप्रचुरेण पूर्वेण भागेन पूर्वरात्रेण प्रकाशपूर्णेन चन्द्रालोकपूर्णेन पश्चिमेन भागेन अपररात्रेण चोपलक्षितस्सनिशीथः संसारमुक्त्योः सन्धिः अन्तरालकाल इव सतां प्रसत्त्यै आसीत् भगवदवतारसमयत्वात् सज्जनानां हृदयप्रसादायाभवत् । संसारमुक्त्योस्सन्धिरपि तमोगुणप्रचुरेण तमोगुणविकारेण वा पूर्वभागेन संसारकालेन

प्रागेव जातेन सितेन धाम्ना मध्योपलक्ष्येण च माधवेन ।
प्रकामपुण्या वसुदेवपत्न्या सम्पन्नसाम्येव निशा बभासे ॥ ११

सहप्रतिच्छन्दशशाङ्कभेदैस्सरस्वतां ताण्डविनस्तरङ्गाः ।
अवेक्ष्य शौरेरवतारवेलां सन्तोषनिघ्ना इव सम्प्रणेदुः ॥ १२

अवादितोदीरितवाद्यघोषं निशाभिराम्रेडितदिव्यगीतम् ।
सतामुपस्थापितसत्त्वलास्यं सङ्गीतमङ्गल्यमभूत्तदानीम् ॥ १३

---

प्रकाशपूर्णेनाविर्भूतस्वरूपज्ञानपरिपूर्णेन पश्चिमभागेन मोक्षकालेन चोपलक्षितस्सतां ब्रह्मविदां हृदयप्रसादाय भवतीत्युपमा ॥ १० ॥

प्रागिति ॥ प्रकामपुण्या अत्यर्थपुण्यकरी प्रागेव पूर्वमेव जातेन सितेन धाम्ना चन्द्रेण मध्ये निशीथे आविर्भावदशायां उपलक्ष्येण दृश्येन माधवेन कृष्णेन चोपलक्षिता निशा रात्रिः वसुदेवपत्न्या देवक्या सम्पन्नसाम्या लब्धसादृश्येव बभौ। सा च देवकी प्रकामं पुण्यवती प्रागेव रोहिण्यां जातेन सितेन धवलेन धाम्ना तेजसा बलभद्रेण मध्येवलग्ने उपलक्ष्येण माधवेन चोपलक्षिता चेति रात्र्यास्तत्सादृश्यम् ॥ ११ ॥

सहेति ॥ सरस्वतां समुद्राणां तरङ्गाः वीचयः शौरेः कृष्णस्य अवतारवेलां आविर्भावसमयं समीक्ष्य दृष्ट्वा सन्तोषनिघ्नाः सन्तोषपरवशा इव प्रतिच्छन्दशशाङ्कभेदैः प्रकर्षेण प्रतिबिम्बचन्द्रविशेषैस्सह ताण्डविन उद्धतनृत्तवन्तस्सन्तः सम्प्रणेदुः समन्तात् नदन्ति स्म ॥ १२ ॥

अवादितेति ॥ तदानीं भगवदवतारसमये अवादितेभ्यः अकृतवादनेभ्य एव वाद्येभ्यः उदीरितः उद्गतः वाद्यघोषो यस्मिन् तथोक्तम् । दिशाभिः दिग्भिः आम्रेडितं अभ्यस्तं दिव्यगीतं आकाशभवगीतं यस्मिन् तथोक्तम् । सर्वासु दिक्षु सञ्चरद्भिर्गन्धर्वादिभिर्बहुशः कृतदिव्यगानमित्यर्थः । सतां साधुजनानां उपस्थापितसत्त्वलास्यं सन्निधापितसत्त्वगुणनर्तनम् । सङ्गीतमङ्गल्यं वाद्यगीतनृत्तत्रिकरूपं (मङ्गलाय हितं) मङ्गल्यं अभूत् ॥ १३ ॥

प्रदीपितैः कंसगृहेषु दीपैस्तापैश्च भावेषु तपोधनानाम् ।
अलभ्यत क्षिप्रमलब्धभङ्गैरहेतुनिर्वाणदशानुभूतिः ॥ ९४

अजस्स्वजन्मार्हतयाऽनुमेने यामष्टमीं यादवभावमिच्छन् ।
द्वितीयया भावितयोगनिद्रा साभूत्तदानीं प्रथमा तिथीनाम् ॥

अथ सितरुचिलग्ने सिद्धपञ्चग्रहोच्चे
व्यजनयदनघानां वैजयन्त्यां जयन्त्याम् ।

---

**प्रदीपितैरिति** ॥ कंसस्य गृहेषु प्रदीपितैः प्रज्वलितैः दीपैः तपोधनानां भावेषु हृदयेषु प्रदीपितैः असुरादिपीडोद्दीपितैः तापैस्सन्तापैश्च अलब्धभङ्गैः अप्राप्तनिर्वापणादिनाशनव्यापारैरेव क्षिप्रं शीघ्रं अहेतुनिर्वाणस्य निर्हेतुकविनष्टस्य दशा स्थितिः नाशइत्यर्थः तदनुभूतिः तत्प्राप्तिः अलभ्यत लब्धा। दीपनाशेन कंसस्याशुभं पापनाशेन तपस्विनां शुभञ्च भावि सूचितम् ॥ ९४ ॥

**अज इति** ॥ अजो विष्णुः यादवभावं यादवत्वं इच्छन् यां अष्टमीं स्वजन्मार्हतया स्वावतरणोचितत्वेन अनुमेने अङ्गीचकार। द्वितीयया स्वस्याः द्वितीयया नवम्या भावितयोगनिद्रा उत्पादितभगवद्योगनिद्रा सा तदानीं तिथीनां प्रथमाऽभूत् भगवदवतारेण मुख्याभूदित्यर्थः । भगवन्मायारूपयोगनिद्रा तत्प्रेरणया तदवतारानन्तरं नवम्यां दुर्गारूपेण यशोदायामभूदिति विष्णुपुराणादिषु कथा। अत्राष्टमी प्रथमा जातेति विरोधः । प्राथम्यं मुख्यत्वं विवक्षितमिति तत्समाधानञ्च ॥ ९५ ॥

सर्गान्ते मालिनीवृत्तमाह। **अथेति** ॥ अथ चन्द्रोदयानन्तरं अनघानां अघविरोधिनां पुण्यदिवसानां वैजयन्त्यां पताकायां श्रेष्ठायामिति यावत् । जयन्त्यां रोहिणीसहितश्रावणमासकृष्णाष्टम्याम् । सिद्धं सम्पन्नं पञ्चानां ग्रहाणां शशिकुजबुधगुरुशनैश्चराणां उच्चं तुङ्गस्थानं यस्मिन्निति तथोक्ते ( चन्द्रादीनामुच्चस्थानानि वृषभमकरकन्याकर्कटतुलाख्यानि। तदुक्तं बृहज्जातके। 'अजवृषभमृगाङ्गनाकुलीराः झषवणिजौ च दिवाकरादितुङ्गाः' इति । श्रावणमासे रवेः सदा तत्सन्निकृष्टस्य शुक्रस्य च मीनमेषयोः स्वोच्चयोरवस्थानासम्भवात्। परिशेषाच्चन्द्रादीनां पञ्चानामुच्चस्थानस्थितिर्विवक्षितेत्यवसीयते । 'पञ्चोच्चो लोकनायकः' इति जात-

अखिलभुवनपद्मक्लेशनिद्रापनुत्त्यै
दिनकरमनपायं देवकीपूर्वसन्ध्या ॥ १६

अवतरति मुकुन्दे सम्पदामेककन्दे
सुरभितहरिदन्तां स्वादुमाध्वीकदिग्धाम् ।
अभजत वसुदेवस्थानमानन्दनिघ्नै-
रमरमिथुनहस्तैराहितां पुष्पवृष्टिम् ॥ १७

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये श्रीकृष्णावतार-वर्णनं नाम द्वितीयस्सर्गः ॥

---

कशास्त्रविदस्तत्फलमाहुः सितरुचिना चन्द्रेण युक्ते लग्ने वृषभलग्ने। देवक्येव पूर्वसन्ध्या प्रातस्सन्ध्या निखिलानि भुवनान्येव पद्मानि तेषां क्लेशएव निद्रा मुकुलीभावः तस्या अपनुत्यै निरासाय अनपायं दिनकरं अस्तमयरहितादित्यं श्रीकृष्णमित्यर्थः। व्यजनयत् प्रादुर्भावयति स्मेत्यर्थः॥ १६॥

**अवेति** ॥ सम्पदां त्रैलोक्यस्याभिवृद्धीनां एककन्दे अन्यनिरपेक्षकारणे॥ सस्यमूलवाचकः कन्दशब्दः कारणसामान्ये लाक्षणिकः॥ मुकुन्दे श्रीकृष्णे अवतरति आविर्भवति सति। वसुदेवस्य स्थानं गृहं आनन्दे आनन्दविषये निघ्नैः अधीनैः आनन्दपरवशैरिति यावत्। अमरमिथुनानां देवद्वंद्वानां हस्तैः करैः आहितां विकीर्णां सुरभितहरिदन्तां वासिताखिलदिगन्तां स्वादुमाध्वीकदिग्धां मधुरमकरन्दरूषितां पुष्पाणां वृष्टिं वर्षं अभजत अलभत। मालिनीवृत्तम्॥१७॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीविश्वजिद्याजि श्रीरङ्गराजाध्वरीन्द्रसूनु श्रीमदप्पय्यदीक्षितेन्द्र विरचित-यादवाभ्युदयव्याख्यानसङ्ग्रहे द्वितीयः सर्गः॥

## ॥ तृतीयः सर्गः ॥

अथ जगन्ति बभूवुरनाविलान्यतिमिरा हरितः प्रचकाशिरे ।
अभजदेव निशा दिवसश्रियं जननभाजिनि देवदिवाकरे ॥ १

ननृतुरप्सरसो दिवि नन्दिताः किमपि गीतमगीयत किन्नरैः ।
श्रुतिसुखैस्समतोषयत स्वनैरमरदुन्दुभिरानकदुन्दुभिम् ॥ २

दशसु तत्र दिशास्वशरीरिणी जय जयेति बभूव सरस्वती ।
अजितमेकमगोचरयत्स्वयं स्वरसवृत्तिरसावसुरान्तकम् ॥ ३

---

**अथेति** ॥ सर्गानन्तरारम्भार्थोऽथशब्दः । देवे कृष्णएव दिवाकरे सूर्ये जननभाजिनि प्रादुर्भावभाजिनि सति जगन्ति अनाविलानि प्रसन्नचित्तानि बभूवुः । हरितः दिशः अतिमिराः अन्धकाररहिताः प्रचकाशिरे अवभासिरे । निशा रात्रिः दिवसश्रियं दिनशोभां अभजदेव प्रापैव । तथा प्रकाशभूताभूदिति भावः । रवावुदिते लोकानान्निद्रापगमाच्चेतःप्रसादो दिशामन्धकारापगमो निशायां दिवसपरिणामश्च भवतीति रूपकसङ्कीर्णक्रियायौगपद्यरूपस्समुच्चयाऽलङ्कारः । द्रुतविलम्बितं सर्गवृत्तम् ॥ १ ॥

**ननृतुरिति** ॥ अप्सरसः दिवि गगने स्वर्गे वा नन्दिताः प्रीतिमत्यः सत्यः ननृतुः नृत्यन्ति स्म । किन्नरैः देवयोनिविशेषैः किमपि अनिर्वचनं अतिमधुरं गीतं गानं अगीयत गीयते स्म । अमराणां देवानां दुन्दुभिर्भेरी श्रुतिसुखैः श्रोत्रसुखहेतुभिः स्वनैः नादैः आनकदुन्दुभिं वसुदेवं समतोषयत सन्तोषयते स्म । तुष्यतीति तोषः पचाद्यचि तत्करोतीति णिचि णिचश्चेत्यात्मनेपदम् । तुषतुष्टाविति धातोरेव हेतुणिजङ्गीकारे तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदं स्यात् ॥ २ ॥

**दशस्विति** ॥ तत्र वसुदेवस्थाने दशसु दिशासु प्रागादयोऽष्टावूर्ध्वमधश्चेति दशसु दिक्षु जयजयेति अशरीरिणी सरस्वती वाणी बभूव । असौ जयजयेति सरस्वती असुराणां अन्तकं हन्तारं अजितं श्रीकृष्णमेकं स्वरसतः (कृष्णएव) मुख्यतः वृत्तिः प्रवृत्तिर्यस्यास्तथाभूता सती अगोचरयत् विषयीचकार । अन्यत्र तु प्रकरणादिना कथञ्चिद्विषयीकरणम् । जयजयेति सम्भ्रमे द्विरुक्तिः ॥ ३ ॥

अनतिवेलसमीरणचोदितैश्शिशिरशीकरशीभरिताम्बरैः ।
जलधरैरभितो दिवि दध्वने सुरगजैरिव सूचितमङ्गलैः ॥ ४

ववुरथो मरुतस्त्रिदशाङ्गनावदनसौरभसारभृतश्शुभाः ।
मुदितनिर्जरमुक्तसुरद्रुमप्रसववृष्टिमधुद्रवमेदुराः ॥ ५

मधुरिपोरवतारमहोत्सवे मुमुदिरे मधुरापुरदेवताः ।
यदभिगन्तरि भक्तजने वरं ददुरशेषमतन्द्रितचेतसः ॥ ६

---

अनतिवेलेति ॥ दिवि आकाशे अनतिवेलेन अतीव्रेण समीरणेन वातेन चोदितैः प्रेरितैः शिशिरैः शीतलैः शीकरैः अम्बुकणैः शीभरितं स्फारीकृतं रमणीयीकृतं वा अम्बरं आकाशं यैः । सूचितं ज्ञापितं मङ्गलं जगतश्शुभं यैस्तथाभूतैः जलधरैः मेघैः सुरगजैः ऐरावतादिभिरिव दध्वने ध्वनितं यथा अभ्रमार्गे अनतिक्रान्तमर्यादप्रवहानिलप्रेरणया चरन्तः 'पुष्करोद्धतशीकराञ्चितगगनास्सुरगजाः जगन्मङ्गलं सूचयन्तस्तदानीं बृंहितरूपध्वनिमकुर्वन् एवञ्जलधराअपि गर्जितरूपध्वनिमकुर्वन्नित्यर्थः ॥ ४ ॥

ववुरिति ॥ अथो अनन्तरं त्रिदशाङ्गनानां देवस्त्रीणां वदनस्य मुखस्य यस्सौरभसारः सौगन्ध्योत्कर्षस्तं बिभ्रतीति तथोक्ताः मुदितैः हृष्टैः निर्जरैर्देवैः मुक्तानां पातितानां सुरद्रुमप्रसववृष्टीनां कल्पतरुपुष्पवर्षाणां मधुद्रवैः मकरन्दस्यन्दैः मेदुराः सान्द्रस्निग्धाः शुभाः मङ्गलाः मरुतः वायवः ववुः वान्ति स्म ॥ ५ ॥

मधुरिति ॥ मधुरिपोः श्रीकृष्णस्य अवतारएव महोत्सवे मधुरापुरस्य देवताः मुमुदिरे मोदमभजन् । यत् यथा अभिगन्तरि इष्टार्थमुपसर्पणकर्तरि भक्तजने अशेषं समस्तं वरं ईप्सितं अतन्द्रितं असञ्जाततन्द्रं बहुवारप्रार्थनेप्यनुत्पन्नवैरस्यं चेतः मनः यासान्तथाभूतास्सत्यः ददुः तथा मुमुदिर इति मोदाधिक्योक्तिः । अधिकप्रमोदा हि प्रभवः तद्दशायामवसरज्ञैः समाश्रितैः प्रार्थितं बह्वपि प्रयच्छन्ति ॥ ६ ॥

अवदधानधियो मुनयस्तदा यदनधीतमधीतवदञ्जसा ।
निगमजातमशेषमवेक्ष्य तन्निरविशन्निव मुक्तिमयीन्दशाम् ॥ ७

प्रसदनं शरदागमसम्भवं नभसि मासि नदीभिरुपाददे ।
महितयोगविदाम्मतिभिस्समं श्रुतिभिरत्यनुपप्लुवनीतिभिः ॥ ८

निखिलचेतनमानसनिस्सृताः कलुषतास्समुपेत्य किल क्षणात् ।
विविशुरम्भ इव स्वयमापगाजलनिधेरिव भोजपतेर्मनः ॥ ९

---

अवेति ॥ तदा अवदधाना अवधानवती धीः येषां ते मुनयः यत् निगमजातं वेदबृन्दं अनधीतं तत् अशेषं अञ्जसा शीघ्रं अधीतवत् अवेक्ष्य अधीतमिव मनसि स्पष्टं प्रकाशमानं दृष्ट्वा मुक्तिमयीं मोक्षरूपां दशां अवस्थां निरविशन्निव अन्वभवन्निव तथा असुख्यन्निवेत्यर्थः ॥ ७ ॥

प्रसदनमिति ॥ नभसि मासि श्रावणे मासे नदीभिः शरदागमसम्भवं शरत्समयागमप्रभवं प्रसदनं प्रसादः नैर्मल्यं उपाददे उपात्तम् । कर्मणि लिट् । शरत्समय इव प्रावृष्यपि नद्यः प्रसन्ना बभूवुरित्यर्थः । किञ्च महितं उत्कृष्टं योगं विदन्तीति तेषां महितयोगविदां मतिभिः बुद्धिभिस्समं सह अनुपप्लवनीतिभिः अनुसृतोपक्रमादिन्यायाभिः श्रुतिभिः वेदैरपि प्रसदनमुपाददे । प्रसदनं प्रकृष्टसदनं शुभाश्रयः । श्रुतिपक्षे प्रसादो झटित्यर्थसमर्पणक्षमत्वम् तथा च भगवत्यवतीर्णैः स एव योगिध्यानस्यासमालम्बनमासीत् भुवि भगवदवतारमहिम्ना विदुषाम्मनः प्रसादाद्वेदानामुपक्रमादिन्यायविरोधेन झटिति यथावदर्थस्फुरणमप्यासीदित्यर्थः ॥ ८ ॥

निखिलेति ॥ निखिलानां चेतनानां समस्तजीवानां मानसेभ्यः हृदयेभ्यः निस्सृताः निर्गताः कलुषताः आविलताः आपगाः किल सरित इव समुपेत्य सम्भूय जलनिधेरिव समुद्रस्येव भोजपतेः कंसस्य अम्भ इव जलमिव मनः चित्तं क्षणात् तूर्णं स्वयं विविशुः किम् ॥ ९ ॥

अमुरवीरगृहाणि पृथग्विधैरशुभशंसिभिरानशिरे मुहुः ।
अमरराजपुरेषु जजृंभिरे शुभनिमित्तशतानि पुनः पुनः ॥ १०

चरमतश्च ऋणादिव देवकीपतिरमुच्यत शृङ्खलतः स्थिरात् ।
निखिलबन्धनिवर्तकसन्निधौ विगलनं निगलस्य किमद्भुतम् ॥

उदितमात्मनि देवकसम्भवा दनुजभेदनमङ्कगतं दधौ ।
किमपि काञ्चनभूभृदधित्यका हरिहयोपलशृङ्गमिवाद्भुतम् ॥ १२

विधृतशङ्खरथाङ्गगदाम्बुजश्शबलितश्शुभया वनमालया ।
पितुरसूत सुतं पृथुकस्तदा जलधिडिम्भनिभो जननीधृतः ॥ १३

---

**असुरेति** ॥ असुरेषु वीराणां श्रेष्ठानां गृहाणि पृथग्विधैर्नानाविधैः अशुभशंसिभिः असुराणां भाव्यकुलक्षयाद्यमङ्गलसूचिकैर्निमित्तैः मुहुः पुनः पुनः आनशिरे व्याप्तानि । कर्मणि लिट् । अमरराजानामिन्द्रादीनां पुरेषु पुनः पुनः शुभनिमित्तानां शतानि बह्वयश्शतसङ्ख्याः जजृम्भिरे जृम्भितानि ॥ १० ॥

**चरमत इति** ॥ देवकीपतिर्वसुदेवः चरमतः चरमात् 'ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य' इति प्रसिद्धात् ऋणादिव । (ऋत्यक) इति प्रकृतिभावः । स्थिरात् दृढात् शृङ्खलतश्च शृङ्खलाच्च, कंसकृतनिगलाच्च अमुच्यत मुक्तः । तदेव दृढशृङ्खलविगलनं कविस्समर्थयते । निखिलबन्धनिवर्तकस्य अविद्याद्यतिदृढसमस्तबन्धनिवृत्तिजनकस्य भगवतस्सन्निधौ निगलस्य विगलनं विदलनं किमद्भुतं किमाश्चर्यम् ॥ ११ ॥

**उदितमिति** ॥ देवकसम्भवा देवकी आत्मनि उदितं उत्पन्नं अङ्कगतं उत्सङ्गगतं दनुजानां असुराणां भेदनं विदारणं कृष्णं काञ्चनभूभृतः सुमेरोः अधित्यका ऊर्ध्वभूमिः किमप्यनिर्वचनीयरूपं अतएवाद्भुतमाश्चर्यं हरिहयोपलशृङ्गं इन्द्रनीलरत्नशिखरमिव दधौ दधाति स्म ॥ १२ ॥

**विधृतेति** ॥ विधृतशङ्खरथाङ्गगदाम्बुजः ऊर्ध्वसव्यदक्षिणकरयोः अधस्सव्यदक्षिणकरयोश्च क्रमेण धृतशङ्खचक्रगदापद्मः । जलनिधिपक्षे गदो गदनं

पितरमात्मभुवामनपायिनं प्रियतमाङ्कगतं परिपश्यता ।
स विभुरानकदुन्दुभिना महानवितथैः स्वगुणैरभितुष्टुवे ॥ १४

प्रणिपतामि भवन्तमनन्यधीरखिलकारणमाश्रिततारणम् ।
अनुगमादनिदंप्रथमा गिरः किमपि यत्पदमेकमधीयते ॥ १५

विषमकर्मविपाकपरम्पराविवशवृत्तिषु देहिषु दुस्तरम् ।
करुणया तव देव कटाक्षिताः कतिचिदेव तरन्ति भवार्णवम् ॥

---

नाम तथा च रथाङ्गगदः रथाङ्गनामेति योज्यम् । शुभया मनोज्ञया वनमालया वैजयन्त्या जलनिधिपक्षे वेलावनपङ्क्त्या शबलितश्चित्रितः अतएव जलधिडिम्भनिभः समुद्रशिशुरिव स्थितः जनन्या मात्रा धृतः पृथुकः अर्भकः पितुर्वसुदेवस्य मुदं सन्तोषं असूत उत्पादयामास ॥ १३ ॥

पितरमिति ॥ आत्मभुवां प्रतिकल्पं भिन्नानां ब्रह्मणां अपायोनभवती-त्यनपायी तं नित्यसिद्धं पितरं नारायणं प्रियतमाङ्कगतं परिपश्यता स्वप्रियाया उत्सङ्गगतमवलोकयता आनकदुन्दुभिना वसुदेवेन सः ब्रह्मणामपि जनकः महान्विभुः अवितथैः तथ्यैः स्वगुणैः अभितुष्टुवे अभिष्टुतः ॥ १४ ॥

प्रणीति ॥ अखिलकारणं सर्वजगत्कारणं आश्रितानां शरणागतानां तारणं संसाराटुत्तारकं भवन्तं त्वां अनन्यधीः अन्यनिरपेक्षमनस्कस्सन् प्रणिपतामि प्रपद्ये । अनिदंप्रथमाः अनादयः गिरः वेदगिरः किमपि इदमित्थमिति परिच्छेत्तुमशक्यं यस्य पदम् (पद्यते प्राप्यते भक्तजनैरिति पदं) स्वरूपं अनुगमात् उपक्रमोपसंहाराद्यैकरूप्यं प्राप्य । ल्यब्लोपे पञ्चमी । अधीयते आमनन्ति । तं प्रणिपतामीति पूर्वेण सम्बन्धः ॥ १५ ॥

विषमेति ॥ हे देव विषमाणां विरुद्धानां दुरन्तानां कर्मणां विपाकस्य फलदानावस्थायाः परम्परया विवशा अवशंवदा वृत्तिर्वर्तनं येषान्तेषु दुष्कर्मभिर्बलात्संसारे विवर्तमानेष्वित्यर्थः । देहिषु शरीरिषु 'यतश्च निर्धारणे' इति सप्तमी । तव करुणया कटाक्षिताः विषयीकृताः कतिचिदेव विरलाएव दुस्तरं कृच्छ्रेण तरितव्यं भवार्णवं संसारसागरं तरन्ति । ते च त्वदयाविषयत्वयोग्यास्त्वद्भक्ताविरला एवेत्यर्थः ॥ १६ ॥

त्वदनुभावमहोदधिशीकरैरवशपातिभिराहितशक्तयः ।
अवधिभेदवतीमुपभुञ्जते स्वपदसम्पदमब्जभवादयः ॥ १७

श्रुतिकिरीटशुभाश्रयविग्रहः परमसत्वनिधिः प्रतिपद्यसे ।
जगदनुग्रहमारुतचोदितो विविधरूपतरङ्गविकल्पनाम् ॥ १८

त्वयि न देव यदायतते न तज्जगति जङ्गममन्यदथापि वा ।
इति महिम्नि तव प्रमिते परं विभजने विविधैः स्थितमागमैः ॥

---

त्वदिति ॥ अब्जभवादयः चतुर्मुखप्रभृतयो देवाः अवशपातिभिः तत्तदनिच्छायामप्यवश्यमापतद्भिः 'वशआयत्ततायां स्याद्वशमिच्छाप्रभुत्वयोः' इति विश्वः । त्वदनुभावमहोदधिशीकरैः त्वत्प्रभावाम्बुधेरम्बुकणैः त्वत्प्रभावलेशैरिति यावत् । आहितशक्तयः उत्पादितस्वस्वाधिकारनिर्वर्तनसामर्थ्यास्सन्तः अवधिभेदवतीं मर्यादाभेदवतीं स्वपदस्य सत्यलोकादेः सम्पदं लक्ष्मीं उपभुञ्जते अनुभवन्ति ॥ १७ ॥

श्रुतीति ॥ श्रुतिकिरीटः 'यएषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादिश्रुतीनां प्रतिपाद्यतयालङ्कारः शुभाश्रयः योगिनां ध्यानस्य शुभालम्बनभूतश्च विग्रहो मूर्तिर्यस्य सः । परमसत्वनिधिः रजस्तमोसंवलिततया उत्कृष्टस्य सत्वगुणस्य शेवधिः । त्वम् । जगदनुग्रह एव मारुतस्तेन चोदितः प्रेरितस्सन् विविधानि रूपाणि अवताराएव तरङ्गास्तेषां विकल्पनां रचनां प्रतिपद्यसे प्राप्नोषि । अत्र जगदनुग्रहादौ मारुतत्वाद्यारोपादेकदेशवृत्तिरूपकेण भगवति समुद्रत्वं प्रतीयते । तत्र समुद्रपक्षे श्रुतिकिरीटः श्रुतिशिरसां प्रतिपाद्यत्वेनालङ्कारः भगवान् तस्य शेषशायिनः शुभाश्रयो विग्रहः यस्य सः परमसत्वनिधिः उत्कृष्टजन्तूनां शङ्खशुक्तिकादीनां निधिरिति योज्यम् ॥ १८ ॥

त्वयीति ॥ हे देव त्वयि विषये यन्नायतते यत् त्वय्यायत्तं न भवति तत् जङ्गमं अथ अन्यदपि स्थावरं वा जगति लोके नास्ति । स्थावरजङ्गमात्मकं सर्वमपि वस्तु त्वदधीनमित्यर्थः । इत्यमेन प्रकारेण तव महिम्नि प्रमिते परिच्छिन्ने सति विविधैः श्रुतिस्मृतीतिहासपुराणपाञ्चरात्रादिरूपैरागमैः विभजने परं सङ्क्षे-

अखिललोकपितुस्तव पुत्रतामहमयाचमनन्यमनोरथः ।
वरद वाञ्छितदानधृतव्रते त्वयि तदेवमयत्नमपच्यत ॥ २०

अवनिभारनिराकरणार्थिनां क्रतुभुजामभिलाषमवन्ध्ययन् ।
जितरिपूणि बहूनि दयानिधे विहरणानि विधातुमिहार्हसि ॥

दनुजमोहनदोहलिना त्वया सहजलाञ्छनसंवरणं क्षमम् ।
तदधुना शमयन्मम साध्वसं यवनिकामधिगच्छ यथेप्सितम् ॥

---

पेण निश्चितस्य तव महिम्नो विशिष्य व्याकरणएव स्थितं निविष्टम् । सर्वप्रपञ्चस्य त्वदधीनत्वं विशिष्यव्याख्यातुमेव श्रुतिपुराणादीनि विविधानि शास्त्राणि प्रवृत्तानीत्यर्थः ॥ १९ ॥

अखिलेति ॥ हे वरद अहमखिललोकपितुः सकललोकजनकस्य तव पुत्रतां त्वदीयपुत्रभावं अनन्याभिलाषरहितस्सन् अयाचं प्राग्जन्मनि याचितवानस्मि । वाञ्छितदानधृतव्रते भक्तजनाभिलषितविश्राणनभृतनियमे त्वयि तद्याचनं एवमनेन प्रकारेण त्वदाविर्भावरूपेण अयत्नं यत्नरहितं यथा तथा अपच्यत स्वयमेव पक्वम् । कर्मकर्तरि यक् ॥ २० ॥

अवनीति ॥ हे दयानिधे अवनिभारनिराकरणार्थिनाम् । क्रतुभुजां देवानां अभिलाषं अवन्ध्ययन् न विफलं कुर्वन् जितरिपूणि जितशात्रवाणि बहूनि विहरणानि क्रीडितानि इह भूमौ विधातुं कर्तुं अर्हसि ॥ २१ ॥

दनुजेति ॥ दनुजमोहने असुरमोहने दोहलिना इच्छावता त्वया सहजलाञ्छनस्य चतुर्भुजत्वादेः संवरणं गोपनं कर्तुं क्षमं योग्यम् । तस्मादधुना मम साध्वसं अप्राकृतरूपदर्शनजन्यं भयं शमयन् अपनयन् सन् यथेप्सितं ईप्सितमनतिक्रम्य ईप्सितानुसारेण यवनिकां तिरस्करणीं सहजलाञ्छनाच्छादकरूपान्तरं अधिगच्छ गृहाणेत्यर्थः ॥ २२ ॥

इति सभीतमवेक्ष्य दयानिधिः स्मितमुखो वसुदेवमभाषत।
त्वमसि मे जनकः किमिहान्यथा किमपि तात मुधा कथितं त्वया ।।
इयममर्त्यपितुस्तव गेहिनी दिविषदां जननी मम चानघा।
अभिमतं युवयोरनवग्रहं समयभावि मयैव समर्थ्यते ।। २४
यदि बिभेषि भजामि मनुष्यतामथ च मान्नय नन्दगृहं क्षणात्।
दुहितरञ्च समानय तस्य तां गतभयो भव दूरगते मयि ।। २५

---

इतीति ।। इति उक्तप्रकारेण सभीतं ससाध्वसम्। भीतमिति भावे क्तः। वसुदेवमवेक्ष्य स्मितमुखः प्रहसिताननः दयानिधिर्देवः अभाषत त्वं मे जनकः पितासि हे तात इह पुत्ररूपेऽस्मिन्विषये त्वया अन्यथा पितॄणां पुत्रेषु यदुक्त-प्रकारस्ततोऽन्यप्रकारेण किमपि विशिष्य मयानुवदितुमप्ययुक्तं 'प्रणिपतामि भवन्तमनन्यधीः' इत्यादिरूपं किमिति मुधा कथितं एवं वक्तुमयुक्तमित्यर्थः ।।

इयमिति ।। अनघा अनवद्या अमर्त्यानामिन्द्रादिदेवानां पितुः काश्यप-रूपस्य तव गेहिनी पत्नी देवकी दिविषदां इन्द्रादीनां मम चोपेन्द्ररूपस्य जननी माता अदितिरूपत्वादतः पूर्वजन्मप्रभृति मज्जननीयमपि ममात्यन्तपूज्येति भावः। ततः किमित्यत आहाभिमतमिति युवयोः इयञ्च त्वञ्च युवान्तयोः अभिमतं कंस-निरोधापनयनादिकं अनवग्रहं अप्रतिबन्धं यथा तथा समयभावि स्वकाले भवि-ष्यत् मयैव समर्थ्यते सम्पाद्यते। वर्तमानसामान्ये भविष्यति लट्। युवयोरभि-मतसम्पादनं पुत्रभूतस्य ममैव कृत्यं तत्र युवाभ्यां वक्तव्यन्नास्तीत्यवधारणाभि-प्रायः ।। २४ ।।

इदानीं तदेव प्रस्तुतकार्यमाह—यदीति ।। यदि बिभेषि दुर्दर्शमिदं रूपं दृष्ट्वा भयं प्राप्नोषि चेत् मनुष्यतां भजामि। अथ तदनन्तरं मां नन्दगृहं नय प्रापय। तस्य नन्दस्य दुहितरं तत्रेदानीमुत्पन्नां कन्याञ्च समानय नन्दस्य मयि स्वापत्यत्वभ्रान्तये कंसस्य तस्यां त्वदपत्यत्वभ्रान्तये चेति भावः। मयि दूरगते नन्दागारङ्गते सति गतभयो भव शिशुरूपावलम्बने मयि यत्किञ्चित्कंसः करिष्य-तीति भयं त्यजेत्यर्थः ।। २५ ।।

अथ निशम्य नियोगमभङ्गुरं मधुजितो मधुराक्षरमन्थरम् ।
हितमिदं प्रतिपद्य तमाददे गुरुतरं कृपया लघुतां गतम् ॥ २६

तुहिनभानुदिवाकरलोचनं निगमनिश्वसितं स्वसुतस्य तत् ।
अनुबभूव मुहुर्मुहुरादरादनघमाननमानकदुन्दुभिः ॥ २७

श्रुतिसुगन्धिसुताननचन्द्रिकामुषितमोहतमा मुनिसन्निभः ।
अधिजगाम स तन्मयतां क्षणादनिमिषत्वमुत प्रतिसन्दधे ॥ २८

---

अथेति ॥ अयं वसुदेवः अभङ्गुरं अभङ्गशीलं कदाप्यन्यथाभावरहितं मधुराणि स्वादून्यक्षराणि यस्येति मधुराक्षरं तच्च मन्थरं मृदुप्रसरञ्च मधुजितः कृष्णस्य नियोगमाज्ञावचः निशम्य श्रुत्वा इदन्नन्दगृहे नयनं हितं प्रतिपद्य विचिन्त्य गुरुतरं स्वतः अतिशयेन गुरुं कृपया वसुदेवस्य भारो भविष्यतीति दयया लघुतां गतं प्राप्तं तं आददे नन्दगृहन्नेतुञ्जग्राह ॥ २६ ॥

तुहिनेति ॥ आनकदुन्दुभिर्वसुदेवः तुहिनभानुदिवाकरलोचनं चन्द्रसूर्यनेत्रं निगमनिश्वसितं वेदनिश्वासं 'अस्य महतो भूतस्य निश्वसितमेतदृग्वेद' इत्यादिश्रुतेः । अनघं रम्यं तत् स्वसुतस्याननं आदरात् मुहुर्मुहुः अनुबभूव पश्यति स्म ॥ २७ ॥

अथ वसुदेवस्य निर्निमेषतया तदाननैकाग्र्यमेवोत्प्रेक्षते—श्रुतीति ॥ शोभनः गन्धः यस्येति सुगन्धि श्रुत्या श्वासभूतवेदेन सुगन्धि च तत्तस्य सुतस्याननं तस्य चन्द्रिकया कान्त्या मुषितं निरस्तं मोहतमः अज्ञानान्धकारो यस्येति तथोक्तः मुनिसन्निभः मुनिसदृशः वसुदेवः क्षणात् तन्मयतां कृष्णतादात्म्यं अधिजगाम प्राप उत अथ अनिमिषत्वं प्राकाश्यपरूपतया देवत्वं प्रतिसन्दधे अनुसंहितवान् स्वकीयानिमिषत्वानुसन्धानादिदानीन्निमेषरहितो जात इत्यर्थः । उत्प्रेक्षाद्वयमिदं वाचकाप्रयोगाद्गम्यम् ॥ २८ ॥

जिगमिषुस्स दिशो दश यादवस्सकृदवैक्षत साध्वसविह्वलः ।
अनघवैभवमर्भकमुद्वहन्नमितगुप्तिनिरुद्धगतौ गृहे ॥ २९

विजघटे सहसैव कवाटिका व्रजमथ व्रजतो यदुभूभृतः ।
उपलकल्पमशेरत रक्षकाः सरणिमादिदिशुर्गृहदेवताः ॥ ३०

क्षरदसूनिव यामिकरक्षकान् मुषितमञ्जुगिरश्शुकशारिकाः ।
यदुकुलेन्दुरपश्यदमीलितान् परिजनानपि चित्रगतानिव ॥ ३१

उपयतो विशिखां सदनान्तरात् कुवलयाभकुमारतनुत्विषा ।
शतमखोपलमेचकया द्रुतं शमितसन्तमसा हरितो बभुः ॥ ३२

---

जिगमिषुरिति ॥ अनघवैभवं अखण्डितप्रभावं अर्भकं कुमारं उद्वहन् जिगमिषुः नन्दगृहं गन्तुमिच्छुः सयादवः वसुदेवः अमितगुप्तिभिः कवाटसङ्घटन-यामिकशुकशारिकानिवेशनादिभिः निरुद्धगतौ प्रतिबद्धगमने गृहे साध्वसेन भयेन विह्वलः विक्लबः स्वाङ्गधारणेऽप्यसमर्थस्सन् दशापि दिशः सकृत् अवैक्षत ॥

वीति ॥ अथ तदीक्षानन्तरं व्रजं गोकुलं व्रजतः गच्छतः यदुभूभृतः यदुराजस्य वसुदेवस्य (सम्बन्धसामान्ये षष्ठी) सहसा शीघ्रमेव कवाटिका कवाटं विजघटे विघटते स्म रक्षकाः उपलकल्पं पाषाणतुल्यं यथा तथा निश्चेष्टमिति यावत् अशेरत शेरते स्म । गृहदेवताः गृहाधिष्ठात्र्यो देवताः सरणिं निर्गमनमार्गं आदि-दिशुः उपदिदिशुः ॥ ३० ॥

क्षरदिति ॥ यदुकुलेन्दुः यदुकुलस्येन्दुरिवाह्लादको वसुदेवः क्षरद-सून् निर्यत्प्राणानिव बहिरवबोधरहितान् यामिकरक्षकान् अनुयामं नियुक्तान् कारागृहरक्षकान् मुषितमञ्जुगिरः अपगतरम्यभाषणाः शुकशारिकाः अमीलितान् उन्मीलितलोचनानपि चित्रगतानिवाकिञ्चित्करान् परिजनान् । अपश्यत् । शारिकाश्शुकवद्भाषणशीलाः पक्षिविशेषाः शुकाङ्गना इति केचित् ॥ ३१ ॥

उपेति ॥ सदनान्तरात् गृहाभ्यन्तरात् विशिखां रथ्यां उपयतः उप-गच्छतः वसुदेवस्य) । सम्बन्धसामान्ये षष्ठी । हरितः दिशः शतमखोपलमेचकया

श्रुतिमयो विहगः परितः प्रभुं व्यचरदाशु विधूतनिशाचरः ।
अनुजगाम च भूधरपन्नगः स्फुटफणामणिदीपगणोद्वहः ॥ ३३

दिनकरोपमदीधितिभिस्तदा दनुजदेहविदारणदारुणैः ।
परिगतः किल पञ्चभिरायुधैर्यदुपतिः प्रजहावसहायताम् ॥ ३४

प्रगुणमिन्दुनिवेदितपद्धतिर्यदुकुलेन्दुरथो यमुनानदीम् ।
परमपूरुषमक्षतपौरुषः पतगराज इवाशु वहन्ययौ ॥ ३५

---

इन्द्रनीलरत्नश्यामलया कुवलयाभस्य इन्दीवरत्विषः कुमारस्य त्विषा देहप्रभया शमितसन्तमसाः निराकृतगाढान्धकाराः बभुर्भान्ति स्म ॥ ३२ ॥

श्रुतीति ॥ श्रुतिमयः त्रिवृद्गायत्र्यादिरूपः विहगः सुपर्णः प्रभुं कृष्णं परितस्सर्वतः । 'अभितः परितः' इत्यादिना द्वितीया । आशु शीघ्रं विधूताः पक्षवातेन कम्पिताः निशाचराः रात्रौ चरन्तो राक्षसादयो येन तथाभूतस्सन् व्यचरच्चरति स्म । भूधरः भुवो भूमेर्धरो धारयिता पन्नगश्शेषश्च स्फुटाः प्रव्यक्ताः फणामणय एव दीपास्तेषां गणस्य समूहस्य उद्वहो वोढा सन् फणारत्नदीपैर्मार्गं प्रकाशयन्निति यावत् अनुजगामानुगच्छति स्म ॥ ३३ ॥

दिनेति ॥ तदा तस्मिन् समये दिनकरोपमदीधितिभिः रविप्रतिमकिरणैः दनुजदेहानां असुरशरीराणां विदारणेन भेदनेन दारुणैः भीषणैः पञ्चभिरायुधैः शङ्खचक्रगदाखड्गशार्ङ्गरूपैर्भगवदायुधैःपरिगतः परिवृतः यदुपतिर्वसुदेवः असहायतां सहायन्ते गच्छन्तीति सहायाः सहयात्राः तद्राहित्यं प्रजहौ त्यजति स्म किलेति परकृतौ इति किलोपाध्यायः कथयतीतिवत् ॥ ३४ ॥

प्रेति ॥ अथो अनन्तरं अक्षतपौरुषः अखण्डितपराक्रमः अतएव पतगराजो गरुड इव परमपूरुषं भगवन्तं वहन् यदुकुलेन्दुः वसुदेवः प्रगुणं ऋजु यथा तथा इन्दुना निवेदितपद्धतिः दर्शितमार्गस्सन् आशु शीघ्रं यमुनानदीं ययौ ॥ ३५॥

तनुतरङ्गपृषत्कणशीतलः सुरभिकैरवसौहृदवासितः ।
अभिसमेतमसेवत मारुतो यमुनया प्रहितो यदुपुङ्गवम् ॥ ३६
पवनकम्पितपल्लवपाणिका प्रहितपुष्पभरा पदवी मुखे ।
उपजुहाव किल भ्रमरस्वनैर्यदुपतिं यमुनोपवनस्थली ॥ ३७
निमिषितासितनीरजलोचना मुकुलिताब्जमुखी सवितुस्सुता ।
ललितदीनरथाङ्गयुगस्वना कुहकदैन्यमशोचदिव प्रभोः ॥ ३८
विकचकैरवतारकिताकृतिं तनुमतीमिव शारदयामिनीम् ।
त्वरितमम्बुनिधेरभिसारिकान्तरितुमैहत सत्यसमीहितः ॥ ३९

---

तन्विति ॥ तनुभिस्सूक्ष्मैः तरङ्गपृषत्कणैः ऊर्मिबिन्दुलवैः शीतलः सुरभिणः कैरवस्य कुमुदस्य सौहृदेन मित्रभावेन संसर्गेण वासितः सुरभितः यमुनया नद्या प्रहितः प्रेषितः मारुतः अभिसमेतं प्राप्तं यदुपुङ्गवं वसुदेवं असेवत श्रान्त्यपनयेन सेवामकरोदित्यर्थः ॥ ३६ ॥

पवनेति ॥ पवनेन कम्पितः पल्लवएव पाणिर्यस्यास्तथाभूता पदवी मार्गः मुखे मार्गपुरोभागे प्रहितपुष्पभरा क्षिप्तकुसुमनिचया यमुनोपवनस्थली यमुनातटारामस्थली यदुपतिं वसुदेवं भ्रमरस्वनैः उपजुहाव किल उपह्वयति स्म किल ॥ ३७ ॥

नीति ॥ निमिषितासितनीरजलोचना मुकुलितेन्दीवरनयना मुकुलिताब्जमुखी मुकुलिताम्बुजवदना ललितदीनरथाङ्गयुगस्वना मनोज्ञविरहकातरचक्रवाकमिथुननिनदा सवितुस्सुता यमुना प्रभोः कृष्णस्य कुहकदैन्यं कंसभयादिव रात्रौ नन्दकुलप्रयाणरूपं मायाविनो दैन्यं अशोचदिव दैन्यानर्हस्य दैन्यं दृष्ट्वा स्त्रिय इत्थं शोचन्तीति भावः ॥ ३८ ॥

विकचेति ॥ विकचकैरवैर्विकसितकुमुदैः तारकिता सञ्जाततारका आकृतिर्यस्यास्तां अतएव तनुमतीं मूर्तां शारदयामिनीं शरत्कालप्रभवां रात्रिमिव स्थितां अम्बुनिधेः अभिसारिकां 'रतार्थिनी तु या याति सङ्केतं साभिसारिका' । अत्र समुद्रमुद्दिश्यगमनाद्यमुनैव तदभिसारिकेत्यध्यवसीयते । तां सत्यसमीहितः अवितथाभिलाषः वसुदेवः त्वरितं शीघ्रं तरितुं ऐहत ऐच्छत् ॥ ३९ ॥

भवति किन्नु भविष्यति वा किमित्यनवधारितशौरिविहारया ।
चकितयेव विरोचनकन्यया विधुतवीचिकरं किल विव्यथे ॥४०

घनतमःपरिपाकमलीमसैर्गुरुभिरूर्मिगणैरनुपप्लुतः ।
अतिततार दिनाधिपतेस्सुतामनघयोगमना इव संसृतिम् ॥ ४१

यदुपतेर्यमुना त्वरितं यतः प्रतियतश्च समर्पितपद्धतिः ।
स्वयममर्त्यमदावलमज्जनी चरणलङ्घ्यजला समजायत ॥ ४२

अजनि पश्चिमतो भृशमुन्नता रविसुता पुरतस्थलशेषिता ।
अधिरुरोह पदं किमसौ हरेः प्रतिययौ यदि वा पितरङ्घ्रिरिम् ॥

---

भवतीति ॥ अनवधारितशौरिविहारया अनाकलितभगवत्क्रीडया नन्दकुलप्रयाणादिकं क्रीडामात्रं वस्तुतो न कंसभयप्रयुक्तमित्यजानत्येति यावत् विरोचनस्य सूर्यस्य कन्यया यमुनया किन्नु भवति किमिदानीं कृच्छ्रं वर्तते किं वा भविष्यति इतः परं किं वा भविष्यतीति चकितया कंसचरितमनुचिन्त्य भीतया सत्या विधुतवीचिकरं कम्पितोर्मिहस्तं यथा तथा विव्यथ इव किल सञ्चल्यतेस्मेव किल । 'व्यथभयसञ्चलयो'रिति धातोर्भावे लिट् ॥ ४० ॥

घनेति ॥ घनतमः परिपाकमलीमसैः गाढान्धकारपरिणामैरिव मलिनैः गुरुभिः पृथुभिः ऊर्मिगणैः वीचिनिचयैः योगिपक्षे सान्द्रतमोगुणपरिणामतया मलिनैः ऊर्मिगणैः अशनाया पिपासा शोक मोह जरा मरण रूपषडूर्मिनिकरैः अनुपप्लुतः अनुपद्रुतः स वसुदेवः अनघयोगमप्रतिबन्धयोगं मनो यस्य स योगी संसृतिं संसारमिव दिनाधिपतेस्सुतां यमुनां अतिततार तरति स्म ॥ ४१ ॥

यदिति ॥ स्वयं स्वतः अमर्त्यमदावलस्य ऐरावतादेर्देवगजस्य मज्जनी ॥ अधिकरणार्थे ल्युट् ङीप् । यमुना चरणलङ्घ्यजला चरणतार्यसलिला सती त्वरितं शीघ्रं यतः गच्छतः प्रतियतश्च प्रतिनिवर्तमानस्य च यदुपतेर्वसुदेवस्य समर्पितपद्धतिः दत्तमार्गा समजायत बभूव ॥ ४२ ॥

अजनीति ॥ रविसुता यमुना पश्चिमतः पश्चिमभागे भृशमुन्नता अजनि जाता । वसुदेवमार्गे समागच्छतः प्रवाहस्य निरोधादिति भावः । पुरतः

अकृतसेतुमनाकलितप्लवां जननसिन्धुदृढप्लवमुद्वहन् ।
रविसुतामतिलङ्घ्य रमापतिं सपदि घोषसमीपमुपानयत् ॥ ४४

अथ कयाचन कारणनिद्रया विवशसुप्तजनं व्रजमाविशत् ।
धनदपत्तनसम्पदि यत्र सा स्वसुतमग्र्यमसूयत रोहिणी ॥ ४५

उपगते वसुदेवसुतेऽन्तिकं नरकवैरिणि नन्दकुटुम्बिनी ।
अरणिसम्भवपावकसङ्गमादभजताध्वरवेदिरिव श्रियम् ॥ ४६

---

पुरोभागे स्थलशेषिता सञ्जातस्थलशेषा अजनीत्यनुषङ्गः । इदं यमुनायास्संस्थान-मुत्प्रेक्ष्यते असौ यमुना हरेः पदं आकाशं अधिरुरोह किं अधिरूढवती किम् । यदि वा अथवा पितरं गिरिं कलिन्दपर्वतं प्रतियया प्रतिनिवृत्ता । पश्चादौन्नत्येन प्रथमोत्प्रेक्षा पुरतः स्थलशेषतया द्वितीया । अत्रोत्प्रेक्षाद्वयेप्यन्यदप्येकं निमित्तं व्यज्यते गङ्गाया गगनप्रवाहगुणोत्कर्षेण पतिस्तस्यामेव रज्येदिति तदसहिष्णुता । सपत्न्युत्कर्षासहिष्णवो हि तत्साम्ये प्रयतन्ते तदशक्तौ पितृगृहमेव प्रतिनि-वर्तन्ते ॥ ४३ ॥

अकृतेति ॥ जननसिन्धोर्भवसागरस्य दृढप्लवं अशिथिलोडुपमिव तारकं कृष्णमुद्वहन् वसुदेवः अकृतसेतुं अनारचितसेतुबन्धां अनाकलितप्लवां अविन्यस्तोडुपां रविसुतां यमुनामतिलङ्घ्य रमापतिं तमेव कृष्णं सपदि घोष-समीपं आभीरग्रामान्तिकं उपानयत् प्रापयत् ॥ ४४ ॥

अथेति ॥ कयाचन अनिर्वचनीयया आश्चर्यभूतया कारणनिद्रया जग-त्कारणभूतया निद्रया भगवन्माययेति यावत् । विवशं अवशात्मकं यथा तथा सुप्तजनं व्रजं गोकुलं आविशत् प्रविष्टः । धनदपत्तनस्य कुबेरनगरस्य सम्पदिव सम्पद्यस्मिंस्तथाभूते यत्र व्रजे सा स्वस्य ज्येष्ठपत्नी रोहिणी अग्र्यं अग्रेभवं स्वसुतं बलदेवं असूयत असूत ॥ षूङ् प्राणिगर्भप्रसवे इति दैवादिकधातोः कर्तरि लङ् ॥

उपेति ॥ नन्दकुटुम्बिनी यशोदा वसुदेवसुते नरकवैरिणि नरकासुरस्य रिपौ भगवति अन्तिकं समीपं उपगते सति अध्वरस्य यागस्य वेदिः अरणिसम्भ-वस्य पावकस्य वैतानिकाग्नेस्सङ्गमादिव श्रियं शोभामभजत ॥ ४६ ॥

न्यधित नन्दवधूसविधे सुतं द्रुतमुपादित गोपकुमारिकाम् ।
अथ निनाय च देवकनन्दनीशयनमानकदुन्दुभिराशु ताम् ॥ ४७

अनवबुद्धजनार्दनकन्यकाविनिमयस्त्वथ भोजगणेश्वरः ।
दृषदि तामभिहन्तुमपातयत् प्रतिजघान च सा चरणेन तम् ॥

नृपतिराशु पदा निहतस्तया निपतितोदितकन्तुकवद्भवन् ।
दवसमावृतशैलनिभः क्रुधा दरनिमीलितदृष्टिरदूयत ॥ ४९

उदपतद्दिवमुग्रघनस्वना युवतिरूपयुगात्ययशर्वरी ।
असुरघातिभिरष्टभिरायुधैरलघुभिश्चपलाभिरिवाश्रिता ॥ ५०

---

न्यधितेति ॥ आनकदुन्दुभिः नन्दवधूसविधे यशोदासमीपे सुतं कृष्णं न्यधित निधत्ते स्म । द्रुतं शीघ्रं गोपस्य नन्दस्य कुमारिकां योगनिद्रावताररूपां उपादित उपादत्ते स्म । अथ उपादानानन्तरं तां कुमारिकां देवकनन्दन्याः देवक्याः शयनं सूतिकागृहशयनं आशु निनाय ॥ ४७ ॥

अनवबुद्धेति ॥ अथ तन्नयनानन्तरं भोजगणस्य भोजवंश्यानां सङ्घस्य ईश्वरः कंसः अनवबुद्धजनार्दनकन्यकाविनिमयस्तु अनवबुद्धः अनवगम्यमानः जनार्दनकन्यकाविनिमयः यस्य तथाभूत एव सन् । तुः पादपूरणे । तां अभिहन्तुं दृषदि शिलायां अपातयत् । सा कुमारिका चरणेन तं प्रतिजघान प्रतिहन्ति स्म ॥

नृपतिरिति ॥ तया कुमार्या आशु शीघ्रं तदा चरणेन निहतस्ताडितः निपतितोदितकन्तुकवत् निपतितोद्गतकन्तुकवत् भवन् जायमानः चरणताडनवेगात् कन्तुकवत् पतनोत्पतनदशामनुभवन्निति यावत् । क्रुधा कोपेन दवसमावृतशैलनिभः दावाग्निपरिवृतशैलोपमः तद्वत्प्रज्वलन्निति यावत् । दरनिमीलितदृष्टिः ईषन्निमीलितलोचनः नृपतिः कंसः अदूयत पर्यतप्यत ॥ ४९ ॥

उदिति ॥ उग्रघनस्य क्रूरमेघस्य स्वन इव स्वनो यस्यास्सा प्रलयशर्वरीपक्षे उग्रो घनस्वनः प्रलयघनगर्जितरूपो यस्यामिति विग्रहः । असुरान् पौनःपुन्येन घ्नन्तीति असुरघातिभिः अष्टभिरष्टभुजगृहीतैरायुधैः अलघुभिः चपलाभि-

अथ च भोजनियन्तुरयन्त्रिता दनुजहन्तुरुदन्तमुदैरिरत् ।
पटु गभीरमुदारमनाकुलं हितमविस्तरमर्थ्यमविप्लवम् ॥ ५१

अहमशेषसुरासुरमोहनी यवनिका मधुकैटभमर्दिनः ।
प्रबलसुम्भनिसुम्भनिपूदनप्रणिहिता हतया तव किम्मया ॥ ५२

वसति नन्दगृहे विबुधद्विषां दमयिता वसुदेवसमुद्भवः ।
अयमसौ तव नाशयितेति सा दरमुदीर्य जगाम यथेप्सितम् ॥

---

विद्युद्भिरिवाश्रिता युवतिरूपयुगात्ययशर्वरी तरुणीरूपा युगान्तकालरात्रिः दिवं अभ्रमुद्दिश्य उदपतत् उत्पपात ॥ ५० ॥

**अथेति** ॥ अथोत्पतनानन्तरं अयन्त्रिता स्वतन्त्रा सा भोजानां राज्ञां नियन्तुः कंसस्य। दनुजहन्तुः उदन्तं कृष्णस्य वृत्तान्तं। (पट्वित्यादीनि क्रियाविशेषणानि) पटु तीक्ष्णं सत्यमिति यावत्। गम्भीरं मन्द्रस्वनं उदारं परुषवर्णप्रधानतया विकटाक्षरबन्धम्। 'विकटाक्षरबन्धत्वमौदार्यं परिकीर्तितं' इति। अनाकुलं असम्भ्रान्तं हितं पथ्य अविस्तरं शब्दविस्तररहितं अर्थ्यं अर्थादनपेतं अविप्लवं वर्णलोपविपर्यासाद्यन्यथाभावरहितञ्च यथा तथा उदैरिरत् उदीरयति स्म ॥ ५१ ॥

**अहमिति** ॥ अहं अशेषाणां सुरासुराणां मोहिनी मोहकरणी ॥ करणे ल्युटिङोप् ॥ मधुकैटभमर्दिनो विष्णोः यवनिका तिरस्करिणी आच्छादनी योगनिद्रेति यावत्। अहञ्च प्रबलयोस्सुम्भनिसुम्भयोर्निषूदने वधे प्रणिहिता भगवता प्रेषिता। मया हतया किं त्वद्व्याभिसन्धिरहितायाः मम हननेन तवानिष्टपरिहारादिति किमपि साध्यन्नास्तीत्यर्थः। गम्यमानसाधनक्रियापेक्षया करणे हतया मयेति तृतीया ॥ ५२ ॥

**वसतीति** ॥ विबुधद्विषामसुराणां दमयिता प्रहन्ता हरिर्वसुदेवसमुद्भवस्सन् नन्दगृहे वसति। अयमसौ इत्थभूतो हरिस्तव नाशयितेति दरं अल्पं सारांशं उदीर्य उक्त्वा ईप्सितमनतिक्रम्य यथेप्सितं ईप्सितन्देशं जगाम। स्वरूपप्रकारपरामर्शितया अयमसावित्यनयोर्नपौनरुक्त्यम् ॥ ५३ ॥

मधुहिरण्यनिभो मधुरापतिर्दिनहुताशनदीनदशाङ्गतः ।
श्वसितजल्पितवेपितहुंकृतैररतिमायतभीतिरसूचयत् ॥ ५४

जळमतिस्सजनार्दनमायया विहसितस्त्रपया जनितव्यथः ।
अपकृतं वसुदेवममोचयद्दयितया सह दीनविलापया ॥ ५५

किमपि चिन्तितमागतमन्यथा किमिदमित्यवशादुपजातया ।
विषविदूषितयेव मनीषया मुहुरदूयत मोहविचेष्टितः ॥ ५६

मध्विति ॥ मधुहिरण्यनिभः मधोर्हिरण्यस्य चासुरस्य तुल्यः मधुरापतिः कंसः दिनहुताशनस्य दीनां क्षीणां दशां निस्तेजस्कत्वरूपां गतः तद्वचनश्रवणेन प्राप्तः आयतभीतिः निरन्तरसन्यन्यमानभयश्च सन् श्वसितेनोष्णनिश्वासेन जल्पितेन अन्यच्चिन्तितमन्यदापतितमित्यादिरूपेण वेपितेन कम्पेन हुंकृतेन हुङ्कारेण च अरतिं निर्वेदं असूचयत् । श्वसितादिभिश्चास्य हृद्गतो निर्वेदस्स्फुटं आसीदित्यर्थः ॥ ५४ ॥

जळेति ॥ जळमतिर्मूढधीः जनार्दनस्य मायया योगनिद्रया विहसितपादताडनादिनापहसितः त्रपया लज्जया जनितव्यथः उत्पादितमनःपीडस्स कंसः अपकृतं अपकारिणं वसुदेवं दीनविलापया कातरपरिदेवनशब्दया दयितया देवक्या सह अमोचयत् निरोधान्मोचयति स्म । अन्यत्रावतीर्णे परिपन्थिनि तन्निरोधः विफलं मत्वेति भावः ॥ ५५ ॥

किमपीति ॥ मोहेन विचेष्टितः चेष्टां कारितः मोहप्रयुक्तसकलव्यापारः सकंसः किमपि किञ्चित्कृत्यं चिन्तितं देवकीवसुदेवयोर्निरुद्धयोस्तदीयगर्भा उत्पत्त्यनन्तरमेव हन्तुं शक्यन्त इति चिन्तितं अन्यथा आगतं इदानीं नन्दकुले वसुदेवसुतो वसतीति प्रकारान्तरं प्राप्तं इदं किमिति अवशात् अनायत्तत्वेन उपजातया विषविदूषितयेव गरलदूषितयेव तापप्रदया मनीषया बुद्ध्या मुहुरदूयत इत्थं विचिन्त्य पुनःपुनः पर्यतप्यतेत्यर्थः ॥ ५६ ॥

अविषये विपदामसुरान्तके पुनरियेष निकारपरंपराम् ।
नियतिरेकमुखी दुरतिक्रमा कृतधिया किमुताविलचेतसा ॥ ५७

परिबभूव चुकोप विसिष्मिये परिजहास हरिं प्रजगर्ज च ।
परिणतेन भवान्तरवासनाग्रहगुणेन भजन् भवितव्यताम् ॥ ५८

क्वचन धामनि कंसनिवेदिते सभयमानकदुन्दुभिरावसत् ।
स्मृतिगतेन सुतेन सजीविता दिनशतानि निनाय च देवकी ॥

---

अविषय इति ॥ विपदां अविषये अगोचरे असुरान्तके कृष्णे पुनः निकारपरम्परां अपकारपरम्परां इयेष इच्छति स्म । ननु तादृशे कथमपकर्तुमैच्छदित्यत आह नियतिरिति एकमुखी एकस्मिन् कृत्ये मुखं प्रारम्भो यस्यास्सा सदसद्वाफलन्दातुं प्रारब्धेति यावत्। नियतिर्दैवं कृतधिया बुद्धिमताऽपि दुरतिक्रमा अतिक्रमितुमशक्या आविलचेतसा किमुत कलुषचेतसा दुरतिक्रमेति किमु वक्तव्यमित्यर्थः ॥ ५७ ॥

परीति ॥ परिणतेन परिपक्वेन भवान्तरवासनाग्रहगुणेन जन्मान्तरवासनामयाग्रहरूपेण गुणेन पूर्वजन्मवैरवासनानुबन्धेनेति यावत् । भवितव्यतां दुष्कर्मविपाकं भजन् कंसः परिबभूव हरिञ्चेतसा फल्गूचकार । चुकोप तस्मै कुप्यति स्म । विसिष्मिये देवकीवसुदेवाविह तयोः पुत्र उत्पद्य नन्दकुले वसतीति विस्मयते स्म । हरिं परिजहास मय्यप्यपकारमिच्छतीति स्वबलावलेपात्परिहसति स्म । प्रजगर्ज च शौर्योन्मादात्प्रगर्जति स्म ॥ ५८ ॥

केति ॥ आनकदुन्दुभिर्वसुदेवः क्वचन धामनि कस्मिंश्चिद्गृहे कंसेन निवेदिते सति सभयं भयसहितं यथा तथा आवसत् तद्गृहमावसति स्म । देवकी च स्मृतिं गतेन स्मृतिगोचरेण सुतेन सजीविता सप्राणा सती दिनानां शतानि बहूनि दिनानि निनाय अतिवाहयां बभूव ॥ ५९ ॥

विगतकन्यकया च यशोदया नियतिसम्भृतनिर्भरनिद्रया ।
चिरसमागतजागरयान्तिके हरिरपत्यमदृश्यत धन्यया ॥ ६०

यदवबुद्धनिराकुलनीतिभिर्मुनिगणैरधुनापि विमृग्यते ।
तदिदमागममौलिविभूषणं विधिवशादभवद्व्रजभूषणम् ॥ ६१

अनघवत्समनाकुलधेनुकं प्रचुरदुग्धमचोरभयोद्भवम् ।
व्रजमनामयविश्वजनं विभुः कृतयुगास्पदकल्पमकल्पयत् ॥ ६२

अजनि गोपगृहेषु मनोरमैरमितकान्तिभिरप्सरसां गणैः ।
यदनुभूतिरसेन समेष्यतः शरणयादवशैशवयौवने ॥ ६३

---

विगतेति ॥ विगतकन्यकया अपगतकन्यकया नियतिसम्भृतनिर्भरनिद्रया दैवसम्पादितगाढनिद्रया चिरसमागतजागरया चिरकालानन्तरमुपगतप्रबोधया धन्यया पुण्यवत्या यशोदया नन्दपत्न्या अन्तिके समीपे अपत्यं हरिः अदृश्यत दृश्यते स्म ॥ ६० ॥

यदिति ॥ अवबुद्धनिराकुलनीतिभिः अवगतप्रतिष्ठितवेदार्थनिश्चायकन्यायैः मुनिगणैः अधुना इदानीमपि विमृग्यते वेदान्तेष्वन्विष्यते तदिदमागममौलिविभूषणं श्रुतिशिरसां प्रतिपाद्यत्वेनालङ्कारभूतं परं ब्रह्म विधिवशान्नन्दादिभाग्यायत्ततया व्रजस्य गोकुलस्य भूषणं अभवत् ॥ ६१ ॥

अनघेति ॥ विभुर्विष्णुः व्रजं गोकुलं अनघवत्सं व्याघ्रादिदुःखरहितवत्सं अनाकुलधेनुकं तृणाद्यर्थमसम्भ्रान्तधेनुकं प्रचुरदुग्धं बहुक्षीरं अचोरभयोद्भवं चोरभयोत्पत्तिरहितं अनामयविश्वजनं व्याधिरहितसमस्तजनं अतएव कृतयुगास्पदकल्पं कृतयुगवासस्थानतुल्यं अकल्पयत् कृतवान् ॥ ६२ ॥

अजनीति ॥ मनोरमैस्सुन्दरैः अमितकान्तिभिरपरिमितलावण्यैः अप्सरसां स्ववेंश्यानां गणैः गोपानां नन्दव्रजवासिनां गृहेषु अजनि जातम् । भावे लुङ् । यदनुभूतिरसेन यासामप्सरसामनुभवजन्येन सुखेन सह शरणयादवस्य जगतां रक्षितुर्यादवस्य कृष्णस्य शैशवयौवने बाल्यतारुण्ये समेष्यतः सङ्गते भविष्यतः ।

सुरमहीसुरतोषणमादरान्नवमुपादित नन्द उदारधीः ।
तरलगोपगणागमसङ्कुलं तनयजन्ममहोत्सवमद्भुतम् ॥ ६४

अधिचकार वदान्यमणेश्श्रियं व्यधित कल्पतरोरनुकल्पताम् ।
व्यजनयच्च सुतप्रसवोत्सवे महति मेघविकत्थनमोघताम् ॥ ६५

निधिमनन्तमिव स्वयमुत्थितं निरवधिं निजभागमिवोदितम् ।
व्रजभुवः प्रतिलभ्य रमापतिं जहसुरैन्द्रमसारतरं पदम् ॥ ६६

---

तस्य शैशवं ताभिस्सह बालक्रीडानुभवजन्यसुखेन तस्य यौवनं तत्सम्भोगसुखेन च समेष्यतीत्यर्थः॥ ६३ ॥

सुरेति ॥ उदारधीः महायशाः नन्दः सुरमहीसुरतोषणं देवब्राह्मणानां सन्तोषदं तरलानां इतस्ततस्सम्भ्रमतां गोपगणानां आगमेन आगमनेन सङ्कुलं अद्भुतं आश्चर्यभूतं नवं इतः प्रागपुत्रतया इदं प्रथमं तनयजन्ममहोत्सवं पुत्रजन्मनि कर्तव्यं महोत्सवं आदरात् उपादित उपादत्ते स्म अकरोदित्यर्थः ॥ ६४ ॥

अधीति ॥ महति सुतप्रसवोत्सवे पुत्रजन्मोत्सवे वदान्यमणेः बहुप्रदस्य मणेश्चिन्तारत्नस्य श्रियं शोभां अधिचकार अधिकृतवान् जग्राहेत्यर्थः। कल्पतरोः अनुकल्पतां अमुख्यकल्पतां व्यधित विधत्ते स्म। मेघविकत्थनमोघतां मेघश्लाघाया व्यर्थतां व्यजनयच्च जनयतिस्म च । चिन्तामणिकल्पवृक्षकालमेघेभ्योऽप्यधिकमर्थिभ्यः प्रादादित्यर्थः ॥ ६५ ॥

निधिमिति ॥ व्रजभुवः व्रजप्रभवा गोपाः स्वयमुत्थितं स्वयमेवोद्गतं अनन्तमन्तरहितं निधिं शेवधिमिव स्थितम् । उदितं मूर्तिं परिगृह्याविर्भूतं निरवधिं निस्सीमं निजभागं आत्मीयभाग्यमिव स्थितम्। "भाग्यैकदेशयोर्भागः" इति रुद्रः । रमापतिं कृष्णं प्रतिलभ्य प्राप्य असारतरं अपार्थं निस्सारं ऐन्द्रं पदं स्वाराज्यं जहसुः हसन्ति स्म ऐन्द्रपदादप्यधिकं सुखमन्वभवन्नित्यर्थः ॥ ६६ ॥

पुत्रं प्रसूय तपसा पुरुषं पुराणं
कालं चिरं विधिवशात्कृतविप्रकर्षौ ।
शङ्काकलङ्कितधियावपि दम्पती तौ
तद्वैभवस्मरणशान्तरुजावभूताम् ॥ ६७

नन्दसद्मनि नवेन्दुसन्निभौ वासमेत्य वसुदेवनन्दनौ ।
वृद्धिमापतुरनेहसा स्वयं स्वादुभोगजननीं सुपर्वणाम् ॥ ६८

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये श्रीकृष्णस्य
नन्दगृहप्राप्तिर्गमनं नाम तृतीयस्सर्गः ॥

---

पुत्रमिति ॥ पुराणं पुरुषं नारायणं तपसा पुत्रं प्रसूय जनयित्वा चिरं कालंबहुकालं विधिवशात् दैववशात् कृतविप्रकर्षौ कृतपुत्रसन्निकर्षाभावौ तौ दम्पती देवकीवसुदेवौ शङ्कया कंसात्त्रासेन कलङ्कितधियौ कलुषितमती अपि तस्य स्वपुत्रस्य वैभवस्य प्रभावस्य स्मरणेन शान्तरुजौ अपगतोपतापौ अभूताम् । वसन्ततिलकावृत्तम् ॥ ६७ ॥

नन्देति ॥ नवेन्दुसन्निभौ नवेन्दुसदृशौ वसुदेवनन्दनौ रामकृष्णौ नन्दसद्मनि नन्दगृहे वासं एत्य प्राप्य अनेहसा कालेन स्वयमेव सुपर्वणां देवानां स्वादुभोगजननीं कंसादिवधद्वारा मधुरस्य स्वस्वपदभोगस्य जननीं उत्पादयित्रीं वृद्धिं आपतुः प्राप्तवन्तौ । यथा चन्द्रः 'प्रथमां पिबते वह्निः' इत्यादि क्रमादेवानां स्वादुभोगजननीं वृद्धिं प्राप्नोति तद्वदित्यर्थः । कृष्णस्य वृद्धौ सत्यामनायासेन कंसादिवधाद्देवानां भोगसम्पत्तिरित्याशयेन तद्वृद्धिस्स्वयमेव भोगजननीत्युक्तम् । रथोद्धतावृत्तम् ॥ ६८ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ-श्रीविश्वजिद्याजि श्रीरङ्ग-राजाध्वरीन्द्रसूनु श्रीमदप्पय्यदीक्षितेन्द्रविरचिते यादवाभ्युदयव्याख्यानसङ्ग्रहे तृतीयस्सर्गः

---

# चतुर्थः सर्गः

मनीषितं कैतवमानुषस्य श्रुत्वा भयक्रोधपरिप्लुतात्मा ।
कंसश्चिरं प्राग्भवकालनेमिश्चिन्तार्णवे मग्नइवावतस्थे ॥ १

स दुर्दमानासुरसत्वभेदान्नेता समाहूय नृशंसचेताः ।
प्रस्थापयामास परैरधृष्यं नन्दास्पदं नाथविहारगुप्तम् ॥ २

कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल कापि माया ।
निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिराविवेश ॥ ३

---

मनीषितमिति ॥ कैतवेन कपटेन मानुषस्य मनुष्यस्य श्रीकृष्णस्य मनीषितं स्ववधाभिप्रायं श्रुत्वा नन्दतनयामुखादाकर्ण्य भयक्रोधयोः परिप्लुतात्मा कृतप्लवनान्तःकरणः प्राग्भवकालनेमिः पूर्वजन्मनि कालनेमिरिति प्रसिद्धो भगवता हतोऽमुष्यः कंसः चिरं चिन्तार्णवे मग्नइवावतस्थे उपस्थितविपत्प्रतीकारचिन्तास्तिमितश्चिरमवतस्थ इत्यर्थः । वृत्तमुपजातिः ॥ १ ॥

स इति ॥ इत्थं चिन्तां प्राप्य स्थितो नृशंसचेताः क्रूरान्तःकरणः नेता प्रभुः कंसः दुर्दमान् दुष्प्रधर्षान् आसुरसत्वभेदान् असुरा एव आसुरास्तान् प्राणिविशेषान् समाहूय नाथस्य कृष्णस्य विहारेण क्रीडया गुप्तं रक्षितं अतएव परैः अरिभिः अधृष्यं अनभिभवनीयं नन्दस्य आस्पदं स्थानं प्रति प्रस्थापयामास प्रथिम्नि सति अनाधृष्यो भवेत्कृष्णस्ततश्शैशवएवात्र कश्चिदुपायः प्रयोजनीय इत्यभिप्रायेणेति भावः ॥ २ ॥

कदाचिदिति ॥ कदाचित् एकदा कंसप्रयुक्ता कापि माया कंसप्रयुक्तानामसुरभेदानां मध्ये काचित्पूतनाख्या शाम्बरी अन्तर्हितपूतनात्मा तिरोहितपूतनाख्यनिजस्वरूपा यशोदाया आकृतिरिवाकृतिर्यस्याः सा तथाभूता सती निद्रापराधीनजने निद्रापरतन्त्रो जनो यस्मिन् तस्मिन् निशीथे अर्धरात्रं व्रजं नन्दगोकुलं आविवेश ॥ ३ ॥

स्तन्येन कृष्णस्स हि पूतनायाः प्राणान् पपौ लुप्तपुनर्भवायाः।
यदद्भुतं भावयतां जनानां स्तनन्धयत्वं न पुनर्बभूव ॥ ४

निशम्य तस्याः परुषं निनादं रूक्षं यशोदा रुदितञ्च सूनोः।
ससम्भ्रमावेगमुपेत्य भीता तमग्रहीद्दुर्ग्रहमागमानाम् ॥ ५

नन्दश्च तीव्रेण भयेन सद्यस्समेत्य पश्यन्ननघं कुमारम्।
तेनैव तस्य त्रिजगन्नियन्तुः प्रायुङ्क्त रक्षां परमार्थवेदी ॥ ६

---

स्तन्येनेति ॥ कृष्णः लुप्तपुनर्भवायाः नष्टपुनर्जननायाः पूतनायाः पूतनाख्यमायायाः स्तन्येन सह प्राणान् पपौ विषरूपस्तन्यपानकालएव प्राणानपि जहारेत्यर्थः। अद्भुतमाश्चर्यभूतं यद्भगवतः पूतनास्तन्यपानं भावयतां ध्यायतां जनानां भक्तानां पुनः स्तनन्धयत्वं स्तनं धयति पिबतीति स्तनन्धयः तस्य भावः स्तनन्धयत्वं न बभूव भगवद्ध्यानस्य मुक्तिप्रदतया पुनर्जननाभावादिति भावः ॥ ४ ॥

निशम्येति ॥ यशोदा नन्दपत्नी तस्याः भगवत्पीयमानप्राणायाः परुषं श्रुतिकठोरं निनादं घोषं तदनु सूनोः तदङ्कशयितस्य रूक्षं तद्वधानिनयाय उच्चैः क्रियमाणत्वात्परुषं रुदितं रोदनञ्च निशम्य श्रुत्वा भीता सती ससम्भ्रमावेगं सम्भ्रमो बहिस्त्वरा आवेगस्तद्धेतुरनिष्टशब्दश्रवणजो मनोविकारस्तदुभयसहितं यथा तथा उपेत्य प्राप्य आगमानां वेदानां दुर्ग्रहं दुरवगाहन्तं अग्रहीत् तदङ्कादगृहीतवतीत्यर्थः ॥ ५ ॥

नन्द इति ॥ परमार्थवेदी भगवानेव सर्वस्य रक्षक इति परममर्थमवगच्छन् नन्दश्च तीव्रेण उत्कटेन भयेन सद्यस्तदैव समेत्य अनघं पूर्ववदेव कुशलिनं कुमारं पश्यन् सन् त्रिजगन्नियन्तुः त्रिलोकनायकस्य तस्य तेनैव रक्षां प्रायुङ्क्त ॥ 'रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः। यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत्' ॥ इत्यादिना भगवन्तमेव रक्षकमनुसन्धाय रक्षां प्रयुक्तवानित्यर्थः ॥६॥

गोपाश्च सम्भूय गुहोपमाक्षीं स्वघोषनिर्ह्रादितविश्वघोषाम् ।
गतासुमैक्षन्त निशाचरीं तां भीमाकृतिं भैमरथीमिवान्याम् ॥ ७

परश्वथैस्तत्क्षणशातितैस्तां विच्छिद्य विन्ध्याचलसानुकल्पाम् ।
अनः प्रवृत्त्या बहिराशु निन्युः क्रव्याद्बलिं प्राज्यमिव क्षिपन्तः ॥

ग्रहादिदोषानपहन्तुकामा गोप्तुस्सतां गोपतयस्समेताः ।
सुवर्णसूत्रग्रथिताभिरामां पञ्चायुधीमाभरणं बबन्धुः ॥ ९

---

गोपा इति ॥ गोपाश्च सम्भूय मिलित्वा स्वघोषेण स्वशब्देन निर्ह्रादितस्सशब्दीकृतः विश्वः कृत्स्नः घोषः आभीरग्रामः यया तां गतासुं घोषानन्तरमुत्क्रान्तप्राणां गुहोपमाक्षीं स्वयं विकृताकारतया गतासुतया च गुहानिभलोचनां भीमाकृतिं भयङ्कररूपां अतएवान्यां भैमरथीमिव स्थिताम् ॥ 'सप्तत्यास्सप्तमे वर्षे सप्तमे मासि सप्तमी । रात्रिर्भैमरथी नाम सर्वप्राणिभयङ्करी' ॥ इत्युक्तलक्षणां प्राणिनां गण्डभूतरात्रिमिव स्थितां निशाचरीमैक्षन्त अपश्यन् ॥ ७ ॥

परश्वथैरिति ॥ विन्ध्याचलसानुकल्पां विन्ध्यपर्वतप्रस्थसदृशीं तथातिशयितमहाकायां तां पूतनां तत्क्षणे शातितैः उत्तेजितैः तदङ्गानामतिकठिनत्वादिति भावः । परश्वथैः परशुभिः विच्छिद्य खण्डयित्वा अनः प्रवृत्त्या शकटस्य प्रवर्तनेन आशु शीघ्रं घोषाद्बहिः प्राज्यं बहुलं क्रव्याद्बलिं क्रव्यादः मांसभक्षाः गृध्रगोमायुप्रभृतयः तेभ्यो बलिं उपहारं क्षिपन्तः प्रयच्छन्त इव निन्युः नयन्ति स्म ॥ ८ ॥

ग्रहादीति ॥ सतां साधूनां गोप्तुः रक्षकस्य भगवतः ग्रहादिदोषान् बालग्रहमातलिप्रभृतीन् शिशुदोषान् अपहन्तुकामाः अपनेतुं कामयमानाः समेताः मिलिताः गोपतयः सुवर्णस्य सूत्रं तत्र ग्रथितं ग्रथनं तेन अभिरामां मनोज्ञां पञ्चानां आयुधानां शङ्खचक्रादीनां भगवदायुधानां समाहारः पञ्चायुधी तां तद्रूपं आभरणं बबन्धुः । पञ्चायुधाभरणधारणं बालानां ग्रहादिदोषवारणमित्याहुः ॥ ९ ॥

रम्याणि रत्नानि रथाङ्गपाणेराकल्पतान्नूनमवाप्नुवन्ति ।
तदङ्गसंस्पर्शरसात्प्रकामं रोमाञ्चितान्यंशुगणैरभूवन् ॥ १०

स शायितः क्षेमविदा जनन्या पर्यङ्किकायां प्ररुदन् कुमारः ।
चिक्षेप तुङ्गं शकटं पदाभ्यां गाढाभिघातेन गिरीन्द्रसारम् ॥ ११

विदारितस्तस्य पदाग्रयोगाद्विकीर्यमाणो बहुधा पृथिव्याम् ।
शब्दायमानश्शकटाख्यदैत्यस्संक्षोभयामास जगन्त्यभीक्ष्णम् ॥ १२

यदृच्छयोत्क्षिप्तपदे कुमारे शैलोपलक्ष्ये शकटे निरस्ते ।
सरोजगर्भोपमसौकुमार्यं परस्पर्श तत्पादतलं यशोदा ॥ १३

---

**रम्याणीति** ॥ रथाङ्गञ्चक्रं पाणौ यस्य तस्य आकल्पतां आभरणत्वं अवाप्नुवन्ति वहमानानि रम्याणि रत्नानि नूनं तदङ्गसंस्पर्शरसात् भगवदङ्गसंस्पर्शेन यत्सुखं तस्मात् अंशुगणैः किरण समूहैः प्रकामं रोमाञ्चितानि सञ्जातरोमाञ्चानि अभूवन् ॥ १० ॥

**स इति** ॥ क्षेमं लब्धस्य कुमारस्य संरक्षणं वेत्तीति क्षेमवित् तया । जनन्या मात्रा पर्यङ्किकायां कुमारोचिते पर्यङ्के शायितः कुमारः कृष्णः प्ररुदन् सन् । गिरीन्द्रस्य सारो बलं यस्य तत् तुङ्गमुन्नतं शकटं पदाभ्यां गाढाभिघातेन रोदनप्रयुक्तपादचलनापदेशकृतेन दृढताडनेन चिक्षेप क्षिपति स्म ॥ ११ ॥

**विदारित इति** ॥ तस्य कृष्णस्य पदाग्रयोगात् चरणाग्रसम्पर्काद्धेतोः विदारितस्सञ्जातविदारः अतएव पृथिव्यां बहुधा विकीर्यमाणः स्वयमेव कीर्णो भवन् शब्दायमानश्शब्दं कुर्वन् शकटाख्यश्शकटाभिधानः दैत्यः जगन्ति अभीक्ष्णं भृशं सङ्क्षोभयामास अत्युग्रेण दलनपतनशब्देन भीतान्यकरोत् । "कश्चिद्दनोस्सुतो वीरः कृष्णस्य वधकाङ्क्षया । नन्दस्य प्रियतामायाच्छाकटं वपुरुद्वहन् ॥" इति नन्दशकटस्यासुररूपत्वमुक्तं हरिवंशे ॥ १२ ॥

**यदृच्छयेति** ॥ कुमारे यदृच्छया स्वेच्छया उत्क्षिप्तपदे ऊर्ध्वं क्षिप्तचरणे शैलोपलक्ष्ये पर्वतवद्दृश्ये तद्वन्महति शकटे निरस्ते सति यशोदा सरोज-

अथाङ्कणे जानुपदाग्रहस्तैश्चक्रायुधे च क्रमणप्रवृत्ते ।
प्रायो धरित्री परिषस्वजे तं सापत्रपा सान्द्ररजश्छलेन ॥ १४

निर्व्याजमन्दस्मितदर्शनीयं नीराजितं कुन्दलरत्नभासा ।
नन्दस्तदानीं न जगाम तृप्तिं मुग्धाक्षरं प्रेक्ष्य मुखं तदीयम् ॥

विश्वानि विश्वाधिकशक्तिरेको नामानि रूपाणि च निर्मिमाणः ।
नामैकदेशग्रहणेऽपि मातुः बभूव कृष्णो बहुमानपात्रम् ॥ १६

---

गर्भोपमसौकुमार्यं अरविन्दाभ्यन्तरमार्दवं (सरोजगर्भशब्देन योग्यतावशात्तत्सौकुमार्यं लक्षणीयम् । तत्पादतलं कुमारस्य चरणयोरधःप्रदेशं पस्पर्श शकटताडनाभिहतिवेदनाशङ्कयेति भावः ॥ १३ ॥

**अथेति ॥** अथातिशैशवापगमानन्तरं चक्रायुधे कृष्णे जानुपदाग्रहस्तैः जानुनी च पदाग्रे च हस्तौ च तैः । अवयवानां पट्सङ्ख्यात्र विवक्षिता । तैष्षड्भिर्विना चंक्रमणासम्भवात् । अतएव न प्राण्यङ्गलक्षणएकवद्भावः । अधिकरणैतावत्त्वेचेति वृत्तिपदार्थसङ्ख्याविवक्षायाम्निषेधात् । अङ्कणे अजिरे चङ्क्रमणप्रवृत्ते चङ्क्रमणमितस्ततस्सञ्चारस्तत्र प्रवृत्ते सति । धरित्री धरणी देवस्य महिषी । सापत्रपा परेभ्यो लज्जा युक्ता सती सान्द्ररजश्छलेन गाढाङ्कणरजोव्याजेन प्रायो नूनं परिषस्वजे आलिलिङ्ग । पांसुमये गृहाङ्कणे चंक्रमणाद्धूसरत्वात्एव धरित्र्यालिङ्गनत्वेनोत्प्रेक्ष्यते ॥ १४ ॥

**निर्व्याजेति ॥** नन्दस्तदानीं कृष्णस्य बाल्यसमये निर्व्याजेन निरुपाधिकेन स्वभावसिद्धेन मन्दस्मितेन दर्शनीयम् । 'दर्शनीयं तदानन्दसान्द्रो यत्र मनोलयः' इति यादवः । कुण्डलरत्नभासा नीराजितं कृतनीराजनं परितोविद्योतितमिति यावत् । मुग्धानि शैशवकलान्यक्षराणि यस्य तत्तदीयं कृष्णस्येदं मुखं प्रेक्ष्य तृप्तिं न जगाम ॥ १५ ॥

**विश्वानीति ॥** विश्वाधिकशक्तिः विश्वस्माद्ब्रह्मादिप्रपञ्चादधिकाशक्तिर्यस्य सः एकस्सहायनिरपेक्षएव विश्वानि कृत्स्नानि नामान्यभिधानानि रूपाण्यभिधेयानि च निर्मिमाणः प्रतिसर्गं सृजन् कृष्णः मातुर्यशोदायाः नामैकदेशग्रह-

तरङ्गितानुश्रवगन्धमादौ तस्याद्भुतं सङ्कपितं सखीभिः ।
वर्णस्वरादिव्यवसायभूम्ना शीक्षाविदां शिक्षणमग्र्यमासीत् ॥ १७

तमीषदुत्थाय निलीनमारात्समीक्ष्य दन्ताङ्कुरचारुहासम् ।
सनातनीं दृष्टिमनन्यदृष्टिस्सानन्दमालोकत नन्दपत्नी ॥ १८

पदैस्त्रिभिः क्रान्तजगत्त्रयन्तं भव्याशया भावितबालभावम् ।
करेण संगृह्य कराम्बुजाग्रं सञ्चारयामास शनैर्यशोदा ॥ १९

---

गेऽपि शैशवात्साकल्येन वक्तुमुक्त्यभिनयेन नामैकदेशोच्चारणेऽपि बहुमानपात्रं अहो मातुर्नाम गृह्णातीति वात्सल्यवतां बन्धूनां श्लाघाविषयोऽभूदित्यर्थः ॥ १६ ॥

तरङ्गितेति ॥ तस्य कृष्णस्य आदौ प्रथमसल्लापसमयएव तरङ्गितस्सञ्जाततरङ्गः उद्भूतः अनुश्रवस्य वेदस्य गन्धो यस्मिन् तत् ॥ सर्ववेदच्छायासंस्पर्शीत्यर्थः । अतएवाद्भुतमाश्चर्यं सखीभिः सङ्कपितं अप्सरोऽवताररूपाभिस्सहसल्लापः 'यदनुभूतिरसेनसमेष्यतश्शरणयादवशैशवयौवना' इति तृतीयसर्गोक्तिरीत्या प्रथमसल्लापमारभ्य गोपकुमारिकाभिस्सहैव क्रीडेति व्यञ्जयितुं सखीभिरिति विशेषणम् । वर्णस्वरादिव्यवसायभूम्ना वर्णा अकारादयः स्वरा उदात्तादयः आदिशब्देन मात्रादयो गृह्यन्ते तेषां व्यवसायो निश्चयः व्यक्ततेति यावत् । तस्य भूम्ना प्रचयेन शीक्षाविदां शीक्षानाम वर्णानां स्थानकरणप्रयत्नादिबोधको वेदाङ्गविशेषस्तदभिज्ञानामग्र्यं मुख्यं शिक्षणमासीत् एवं स्वरवर्णाद्यभिव्यक्तया वेदोच्चारणकर्तव्यमिति लक्षणज्ञानामपि शिक्षाकरमभवदित्यर्थः ॥ १७ ॥

तमिति ॥ नन्दपत्नी यशोदा ईषदुत्थाय आरात् निलीनं पुनरप्यवाक्त्याभिनयेनोपविष्टं सम्प्रेक्ष्य दन्तानामङ्कुरैश्चारुहासं सनातनीं दृष्टिं लोकानामनपायिदृष्टिरूपं दृष्टिवत्सदा प्रकाशत्वात्प्रियत्वाच्च । तं कृष्णं अनन्यदृष्टिरन्यनिरपेक्षदृष्टिस्सती सानन्दमालोकत सप्रमोदमपश्यत् ॥ १८ ॥

पदैरिति ॥ भव्याशया शुभचित्ता कुमारस्य क्षेमार्थिनी यशोदा त्रिभिः पदैश्चरणविन्यासैः क्रान्तजगत्त्रयं आक्रान्तलोकत्रयं तथा भावितबालभावमभिनीतबाल्यं तं देवं करेण स्वहस्तेन कराम्बुजाग्रं तस्य करः अम्बुजमिव तस्याग्रमङ्गुलीप्रदेशं संगृह्य गृहीत्वा शनैस्सञ्चारयामास क्रमेणैनं सञ्चारयति स्म ॥ १९ ॥

स्खलद्गतिं द्वित्रपदप्रचाराज्जानुक्रमे जातरुचिं कुमारम् ।
भुग्ने समावेश्य वलग्नभागे स्तन्यम्मुदा पाययते स्म धन्या ॥ २०

क्रमेण भूयोऽपि विहारकाङ्क्षी नन्दस्य दारैरभिनन्द्यमानः ।
नित्यानुभूतं निगमान्तभृङ्गैर्निजं पदाब्जं निदधे पृथिव्याम् ॥ २१

ससञ्चरन् साधुजनप्रतीपैर्मा भुज्यतां सेयमितीव मत्वा ।
चक्रादिभिः पादसरोजचिह्नैरामुद्रयामास महीमनन्यैः ॥ २२

आलम्ब्य मातुः करपल्लवाग्रं शनैश्शनैस्सञ्चरतो मुरारेः ।
बभार चित्रामिव पत्त्ररेखां धन्या पदन्यासमयीं धरित्री ॥ २३

---

**स्खलदिति** ॥ धन्या सुकृतिनी यशोदा द्वित्रपदप्रचारात् द्वौ वा त्रयो वा मानं येषान्तानि द्वित्राणि द्वित्राणि पदानि प्रचारः तस्माद्धेतोः स्खलद्गतिं अत एव जानुक्रमे जानुचंक्रमणे जातरुचिं कुमारं भुग्ने अवनते वलग्नभागे मध्यदेशे समावेश्य मुदा स्तन्यं पाययते स्म पादप्रचारश्रान्त्यपनयायेति भावः ॥ २० ॥

**क्रमेणेति** ॥ भूयोपि स्तन्यपानानन्तरं पुनरपि विहारकांक्षी क्रीडामाकांक्षितुं शीलवान् नन्दस्य दारैर्यशोदया अभिनन्द्यमानः उत्साहजननाय श्लाघ्यमानः देवः निगमान्ता एव भृङ्गास्तैर्नित्यानुभूतं नित्यमुपभुक्तं तात्पर्यविषयमिति यावत् । निजमात्मीयं पदाब्जं क्रमेण पृथिव्यां निदधे । यशोदयाजनितोत्साहः स्वयमेवोत्थाय स्थित इत्यर्थः ॥ २१ ॥

**स इति** ॥ सञ्चरन् गृहाङ्कणभूमौ पर्यटन् सदेवः । सा भगवत्सम्बन्धित्वेन प्रसिद्धा इयं भूमिः साधुजनप्रतीपैस्सात्विकजनविपरीतैः माभुज्यतामिति मत्वेव अनन्यैरन्याश्रयो नास्ति येषान्तैस्सात्विकेतरसाधारण्यरहितैः पादसरोजचिह्नैश्चक्रादिभिर्महीं आमुद्रयामास समन्तान्मुद्रावतीञ्चकार । यथा गृहारामादिषु ब्राह्मणादिभोग्यत्वसूचनाय तत्तदसाधारणदण्डकमण्डल्वादिमुद्राङ्कुर्वन्ति तद्वदिति भावः ॥ २२ ॥

**आलम्ब्येति** ॥ धन्या सुकृतिनी धरित्री मातुर्यशोदायाः करपल्लवयोरग्रमालंब्य शनैश्शनैस्सञ्चरतः मुरारेः कृष्णस्य पदन्यासमयीं चरणविक्षेपरूपां

अकर्मनिघ्नो भुवनान्यजस्रं सङ्कल्पलेशेन नियम्य दीव्यन् ।
प्रचारितः प्रस्नुतया जनन्या पदे पदे विश्रममाचकाङ्क्षे ॥ २४

सुरप्रसूनैस्सुरभीकृतानामारोहणान्यङ्कणवेदिकानाम् ।
तमारुरुक्षुन्तरलाङ्घ्रिपद्मं धातारमारोहयदाशु धात्री ॥ २५

तलेषु तस्याङ्कणपादपानां ताळानुकूलेषु गतागतेषु ।
व्रजस्थिताः स्वर्गसदामशृण्वन् दूरोदितान् दुन्दुभितूर्यनादान् ॥

---

चित्रामिव नानाविधमकराद्याकृतियुक्तां पत्ररेखां बभार । इवशब्दो वाक्यालङ्कारे ॥ २३ ॥

अकर्मेति ॥ अकर्मनिघ्नः अकर्माधीनः सङ्कल्पलेशेन सङ्कल्पमात्रेण भुवनानि नियम्य व्यवस्थाप्य अजस्रं सदा दीव्यन् क्रीडन् एतावन्ति भुवनान्यनायासेन स्वसङ्कल्पमात्रेण सृष्टिसंहारादिकर्मताङ्गीत्वा क्रीडन् सः प्रस्नुतया वात्सल्येन स्तनप्रस्नवयुक्तया जनन्या प्रचारितस्सञ्चारितस्सन् पदे पदे प्रतिपदं विश्रमं विश्रान्तिं आचकाङ्क्षे आकाङ्क्षते स्म ॥ २४ ॥

सुरेति ॥ सुराणां प्रसूनैः कल्पवृक्षपुष्पैः सुरभीकृतानां अङ्कणवेदिकानां अङ्कणेषु निर्मितानां वेदिकानां आरोहणानि सोपानानि आरुरुक्षुं आरोढुमिच्छुं अतएव तरलाङ्घ्रिपद्मं चञ्चलपादकमलं धातारं जगतां स्रष्टारं भगवन्तं धात्री माता यशोदारूपा उपमाता वा काचित् आशु शीघ्रं आरोहयत् आरोहयति स्म ॥ २५ ॥

तलेष्विति ॥ व्रजस्थिताः गोपाः गोप्यश्च अङ्कणपादपानां तलेषु चत्वरवृक्षाणामधः प्रदेशेषु अधिकरणेषु ताळानुकूलेषु स्वकीयताळानुकूलेषु तस्य कृष्णस्य गतागतेषु गमनागमनेषु सत्सु बालाः खल्वाह्वानार्थबन्धुजनकृतकरताळानुरोधेन गतागतानि कुर्वन्ति । दूरे अभ्रमार्गे उदितानुत्पन्नान् स्वर्गसदां देवानां कृष्णस्य गतागताभ्यासदर्शनेन देवकार्यसिद्धेर्नैदीयस्त्वबुद्ध्या सन्तुष्टानां दुन्दुभितूर्यनादान् भेरीवाद्यशब्दान् अशृण्वन् ॥ २६ ॥

य एष लोकत्रयसूत्रधारः पर्यायपात्राणि चराचराणि ।
आनर्तयत्यद्भुतचेष्टितोऽसौ ननर्त खलं नवनीतकाङ्क्षी ॥ २७
गृहेषु दध्नो मथनप्रवृत्तौ पृषत्कणैरुत्पतितैः प्रकीर्णः ।
निदर्शयामास निजामवस्थां प्राचीं सुधाशीकरयोगचित्राम्॥ २८
त्रस्यन्मुकुन्दो नवनीतचौर्यान्निर्भुग्नगात्रो निभृतं शयानः ।
निजानि निश्शब्ददशां ययाचे बद्धाञ्जलि बालविभूषणानि ॥ २९
आरण्यकानां प्रभवः फलानामरण्यजातानि फलान्यभीप्सन् ।
विस्रंसिधान्याञ्जलिना करेण व्याधात्मजां विश्वपतिर्सिषेवे॥ ३०

---

य इति ॥ लोकत्रयस्य सूत्रधारः नर्तयिता य एषः पर्यायपात्राणि क्रमेण नर्तकरूपतां प्राप्तानि चराचराणि स्थावरजङ्गमानि आनर्तयति अद्भुतचेष्टितः आश्चर्यचरित्रः असौ कृष्णः नवनीतकाङ्क्षी सन् (आभीक्ष्ण्ये णिनिः) खलं सुन्दरं यथा तथा ननर्त नर्तनं दृष्ट्वा गोप्यो नवनीतं प्रयच्छन्तीति तदर्थं नृत्यति स्म ॥२७॥

गृहेष्विति ॥ गृहेषु स्वगृहे अन्येषु बन्धुगृहेषु च दध्नः मथनस्य प्रवृत्तौ उत्पतितैरुत्थितैः पृषत्कणैर्दधिबिन्दुलेशैः प्रकीर्णः अवकीर्णः नवनीतादरेण समीपेऽवस्थानादिति भावः । कृष्णः सुधाशीकरयोगचित्रां अमृतकणसम्पर्केण कर्बुरां प्राचीममृतमथनकालीनां निजामवस्थां दशां निदर्शयामास प्रदर्शयति स्म । तद्दशायामेवं स्थितोऽस्मीति दर्शितवानित्यर्थः ॥ २८ ॥

त्रस्यन्निति ॥ नवनीतचौर्याद्धेतोस्त्रस्यन् गोपिकाभ्यो बिभ्यत् निर्भुग्नगात्रः निभृतं शयानः नवनीतशून्यं भाण्डं दृष्ट्वा मामन्विष्य गोपिकामद्राक्षुरिति सङ्कुचितगात्रः क्वचिद्गृहकोणे निश्शब्दं शयानः मुकुन्दः निजानि बालविभूषणानि अञ्जलिं बध्वा निश्शब्ददशां ययाचे धृतान्यपि निश्शब्दानि भवन्त्विति साञ्जलिबन्धः प्रार्थितवानित्यर्थः ॥ २९ ॥

आरण्यकानामिति ॥ अरण्यसम्बन्धिनोऽध्याया उपनिषद्भागा आरण्यकास्तेह्यरण्येऽध्येयाः । तत्प्रतिपाद्यतया तत्सम्बन्धीनि दहराद्युपासनफलान्या-

सुजातरेखात्मकशङ्खचक्रं ताम्रोदरं तस्य करारविन्दम् ।
विलोकयन्त्याः फलविक्रयिण्याः विक्रेतुमात्मानमभूद्विमर्शः ॥ ३१

आपूरयत्स्वादुफलार्पणेन क्रीडाशिशोर्हस्तपुटं किराती ।
रत्नैस्तदा कौस्तुभनिर्विशेषैरापूरितं तत्फलभाण्डमासीत् ॥ ३२

मुहुः प्रवृत्तं नवनीतचौर्ये वत्सान्विमुञ्चन्तमदोहकाले ।
उलूखले कुत्रचिदात्तपुण्ये बन्धुं सतां बद्धुमियेष माता ॥ ३३

---

रण्यकानि फलानि (क्वचिदपवादविषयेप्युत्सर्गोभिनिविशत इति न्यायाच्छप्रत्यय-विषयादप्यारण्यकशब्दात्प्राग्दीव्यतोणप्रत्ययः) तेषां फलानां प्रभवः उत्पत्तिस्थान-भूतः । आरण्यकानामरण्यजातानां फलानां प्रभवइत्यपि प्रतीयते । तथाप्यरण्यजा-तानि फलानि वीथ्यां विक्रीयमाणानि बदरादीन्यभीप्सन् प्राप्तुमिच्छन् विश्वस्य पतिः कृष्णः विस्रंसिधान्याञ्जलिना शैशवादृढबन्धासामर्थ्याभिनयेनाङ्गुलीविव-रेषु विस्रंसमानं फलमूल्यव्रीहियवादि यस्मात्तथाभूतोऽञ्जलिः कुब्जकरद्वययोगो यस्य तेन करेण उपलक्षितस्सन् व्याधात्मजां फलविक्रयिणीं व्याधपुत्रीं सिषेवे उपससर्पेत्यर्थः ॥ ३० ॥

सुजातेति ॥ सुजातरेखात्मके अभिजातरेखारूपे शङ्खचक्रे यस्मिन् तत् ताम्रोदरं अरुणतलं तस्य करारविन्दं फलग्रहणाय प्रसारितं विलोकयन्त्याः फल-विक्रयिण्यः फलानि विक्रीणानायाः किरातपुत्र्याः आत्मानं विक्रेतुं रागेण स्वात्मा-नमेव कृष्णसात्कर्तुं विमर्शो विचारोऽभूत् ॥ ३१ ॥

आपूरयदिति ॥ किराती फलविक्रयिणी क्रीडया शिशोः कृष्णस्य हस्त-पुटमञ्जलिं स्वादुफलार्पणेन मधुरफलप्रदानेन आपूरयत् तदा तस्मिन् समये तस्याः फलभाण्डं फलभाजनं कौस्तुभान्निर्विशेषैः विशेषरहितैस्तत्सदृशैः रत्नैः किरात-वनितायाः आदरेण प्रसन्नस्य भगवतस्सङ्कल्पेनापादितैः आपूरितमासीत् ॥ ३२ ॥

मुहुरिति ॥ नवनीतचौर्ये मुहुः पुनः पुनः प्रवृत्त अदोहकाले दोहव्यति-रिक्ते मध्याह्नादिसमये वत्सान्विमुञ्चन्तं मातृभिस्संयोजनाय विसृजन्तं सतां

आनीतमग्रे निजबन्धनार्थं दामाखिलं संस्थितमप्यपूर्णम् ।
निरीक्ष्य निर्विण्णधियो जनन्यास्सङ्कोचशक्त्या स बभूव बन्ध्यः॥

बद्धं तथा भावयतां मुकुन्दमयत्नविच्छेदिनि कर्मबन्धे ।
तपस्विनी तत्क्रतुनीतिराद्या सव्रीळमारण्यकथासु तस्थौ ॥ ३५

उलूखले प्रग्रथितेन दाम्ना निबद्धमास्राविललोलनेत्रम् ।
सहासमैक्षन्त जनास्समन्तादाळानितं नागमिवानभिज्ञाः ॥ ३६

---

बन्धुं बन्धुवर्द्धितैषिणं माता यशोदा आत्तपुण्ये कृष्णांगसम्पर्कप्रापकपुण्यवति कुत्रचिदुलूखले बद्धुमियेष ॥ ३३ ॥

**आनीतमिति** ॥ सः कृष्णः निजबन्धनार्थं निजबन्धनायेदं यथा तथा अग्रे पुरत आनीतं दामाखिलं संहितमपि गृहे यावदस्ति तत्सर्वं परस्परग्रथितमपि अपूर्णं स्वमायया बन्धनापर्याप्तं निरीक्ष्य निर्विण्णधियः खिन्नमतेः जनन्याः यशोदायास्सङ्कोचशक्त्या तन्निर्वेददर्शनोदितकरुणाङ्गीकृतया बन्ध्यः बन्धनार्हो बभूव ॥ ३४ ॥

**बद्धमिति** ॥ उलूखले बद्धं मुकुन्दं तथा बद्धत्वेन प्रकारेण भावयतां ध्यायतां कर्मबन्धे संसारबीजकर्मरूपे बन्धे अयत्नेन विच्छेदोऽस्यास्तीति अयत्नविच्छेदिनि सति आद्या प्राचीना 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्यभवतीति' श्रुतिसिद्धा तत्क्रतुनीतिः इह यत्क्रतुः यत्सङ्कल्पः पुरुषो भवति तस्य प्रेत्यतत्प्राप्तिरूपः वेदान्तिभिस्तत्क्रतुन्याय इति व्यवह्रियमाणा नीतिः तपस्विनी भगवन्तं बद्धं भावयतां देहपातानन्तरं बन्धविच्छेदेन स्वार्थान्यथाभावाद्दीना सती । सव्रीळं सलज्जं आरण्यकथास्वारण्यसम्बन्धिनीषूपनिषत्सु कथासु तस्थौ । यथालोके स्वोक्तस्यान्यथाभावे सति व्रीडया विवर्णवदनाः क्वचिन्निलीना भवन्ति तद्वदिति भावः ॥ ३५ ॥

**उलूखल इति** ॥ उलूखले प्रग्रथितेन सान्द्रबद्धेन दाम्ना निबद्धं आस्राविललोलनेत्रं स्वच्छन्दसञ्चारविघ्ने भयेन च अश्रुकलुषचञ्चललोचनं आळानितं सञ्जाताळानं आळाने बद्धं नागं हस्तिनमिव स्थितं यथा वन्यो हस्ती इदंप्रथमं

अनादराकृष्टमुलूखलं तद्यावर्जुनौ शैलनिभौ बभञ्ज ।
बभूवतुर्ब्रह्मसुतस्य शापान्मुक्तौ मुनेर्यक्षवरौ तदा तौ ॥ ३७

शापावधिं ब्रह्मसुतेन दत्तं सम्प्राप्य तौ शौरिसमागमेन ।
देहेन दिव्येन विदीप्यमानौ स्तुत्वा हरिं धाम समीयतुः स्वम् ॥

अदृष्टपूर्वं भुवि पूतनादेरुदन्तमुत्पातमुदीक्षमाणाः ।
समेत्य गोपास्सह माधवेन बृन्दावनं सत्वरमभ्यगच्छन् ॥ ३९

---

आलानेबन्धनं न सहते तथा बन्धनासहमानतया व्याकुलमित्यर्थः । कृष्णं अर्नभिज्ञाः अभिनयमात्रमेतद्देवस्येत्यवबोधरहिताः सहासं यथा ऐक्षन्त ॥

अनादरेति ॥ अनादराकृष्टन्तदुलूखलं शैलनिभो पर्वतसदृशौ यावर्जुनौ ककुभवृक्षौ बभञ्ज अर्जुनद्वयमध्ये कृष्णे गते तिर्यग्भूतमुभाभ्यामपि निरुद्धमिति कृष्णेनाकृष्यमाणं सद्भग्नौ चकार तौ तदा ब्रह्मसुतस्य मुनेर्नारदस्य शापान्मुक्तौ सन्तौ यक्षवरौ यक्षश्रेष्ठौ बभूवतुः । तौ पुराकिल नळकूबरो मणिग्रीवश्चेति द्वौ धनदपुत्रौ मदिरापानमत्तौ विवसनौ स्त्रीभिः क्रीडन्तौ नारदं दृष्ट्वापि तथैव स्थितौ यावत्कृष्णसमागमं स्थावरौ भवत इति तेन शप्तौ नन्दकुले यमळार्जुनरूपेण प्ररूढाविति पुराणकथा ॥ ३७ ॥

शापेति ॥ तौ यक्षवरौ ब्रह्मसुतेन नारदेन दत्तं शापावधिं शापान्तं शौरिसमागमेन कृष्णस्य सम्पर्केण सम्प्राप्य दिव्येन देवसम्बन्धिना देहेन विदीप्यमानौ सन्तौ हरिं स्तुत्वा स्वं धाम स्थानं अळकां समीयतुर्जग्मतुः ॥ ३८ ॥

अदृष्टेति ॥ भुवि भूलोके अदृष्टपूर्वं पूर्वमदृष्टं पूतनादेः उदन्तं वृत्तान्तं उत्पातमुदीक्षमाणा तस्य स्थानस्य अरिष्टसूचकं विकारं तर्कयन्तो गोपाः समेत्य सम्भूय माधवेन सह सत्वरं शीघ्रं बृन्दावनं वनविशेषं अभ्यगच्छन् तत्रैव वास्तव्यकुटुम्बितया स्थातुङ्गता इत्यर्थः ॥ ३९ ॥

येनौषधीनामधिपं पुरस्तादाह्लादहेतुं जगतामकार्षीत् ।
तेनैव दध्यौ मनसा वनं तत्कृष्णो गवां क्षेमसमृद्धिमिच्छन् ॥

अनुग्रहाब्धेरिव वीचिभेदैराप्याययामास शुभैरपाङ्गैः ।
वनं पृथिव्या इव यौवनन्तद्गोप्ता सतां गोधनवंशचन्द्रः ॥ ४१

आसीन्निषेव्या पृथिवी पशूनां पुण्ड्रेक्षुरम्याणि तृणान्यभूवन् ।
तस्मिन्नरण्ये तरुभिः प्रपेदे कल्पद्रुमाणामनुकल्पभावः ॥ ४२

अदृष्टपूर्वैरधिकां विशेषैरालक्ष्यवन्याममरेन्द्रमान्याम् ।
नन्दोपनन्दप्रमुखैर्ननन्दे नाकाधिरूढैरिव नाथभूम्ना ॥ ४३

---

**येनेति ॥** कृष्णः पुरस्तात् सर्गादौ येन मनसा जगतामाह्लादहेतुं ओषधीनामधिपञ्चन्द्रं अकार्षीत् असृजत् । तेनैव मनसा अखिलजगत्क्षेमङ्करस्वभावेन तद्वनं गवां क्षेमसमृद्धिमिच्छन् दध्यौ ध्यायति स्म । यथा गवामभिवृद्धिर्भवति तथा तस्मिन्वने तृणजलच्छायादिभूमास्त्विति दध्यावित्यर्थः ॥ ४० ॥

**अन्विति ॥** सतां सात्विकानाम् गोप्ता संरक्षकः गोधनानां गोपानां वंशस्य चन्द्रः चन्द्रवदाह्लादकः कृष्णः पृथिव्याः भूमेर्यौवनमिव स्थितं तस्याश्शोभावहत्वात्तद्वनं बृन्दावनं अनुग्रहाब्धेः प्रसादसागरस्य वीचिभेदैस्तरङ्गविशेषैरिव स्थितैश्शुभैर्मनोज्ञैरपाङ्गैः कटाक्षैः आप्याययामास पोषयामास ॥ ४१ ॥

**आसीदिति ॥** तस्मिन्नरण्ये बृन्दावने पृथिवी पशूनां गोमहिष्यदीनां निषेव्या कण्टकशर्कराद्यभावेन संवेशादियोग्या बभूव पुण्ड्र इतीक्षुः पुण्ड्रेक्षुरतिमधुरेक्षुविशेषः तद्वद्रम्याणि स्वादूनि तृणान्यभूवन् । तरुभिः कल्पद्रुमाणां अनुकल्पभावः अमुख्यता स्वादुसुगन्धिफलकुसुमादिभरिततया तत्सादृश्यमिति यावत् । प्रपेदे प्राप्तः । कर्मणि लिट् ॥ ४२॥

**अदृष्टेति ॥** नन्दः उपनन्दः तदाख्यस्तस्मिन् व्रजे कश्चिद्गोपवृद्धश्च प्रमुखौ प्रधानभूतौ येषान्तैः गोपैः (कर्तृभिः) नाथभूम्ना कृष्णस्य महिम्ना अदृष्टपूर्वैः पूर्वमदृष्टैर्विशेषैः फलपुष्पादिभिः द्रव्यपदार्थैः अधिकां समृद्धां अमरेन्द्रमान्यां देवे-

दैत्यैस्तृणावर्तमुखैरयत्नान्मुहुर्निरस्तैर्मुदितो मुकुन्दः ।
अभुङ्क्त रामेण सहाद्भुतं तत्पुण्यं वनं पुण्यजनेन्द्रमान्यम् ॥४४

सपक्षकैलासनिभस्य गोपा बकस्य पक्षानभितो बबन्धुः ।
वने तदन्यानपि घोरवृत्तीन् क्षेप्तुं प्रवृत्ता इव केतुमालाः ॥ ४५

पुरस्कृतं मङ्गलगीतवाद्यैः पुंसः प्रसत्त्यै जगतां प्रसूतेः ।
कयापि तत्र स्पृहयान्वतिष्ठन् कन्याव्रतं किञ्चन गोपकन्याः ॥

---

न्द्रस्य माननीयां नन्दनसदृशत्वादिति भावः । वन्यां वनसमूहं आलक्ष्यालोक्य नाकाधिरूढैः स्वर्गमारूढैरिव ननन्दे सन्तुष्टम् । भावे लिट् ॥ ४३ ॥

दैत्यैरिति ॥ अयत्नाद्यत्नमप्राप्य निरस्तैरनायासेन हतैः तृणावर्तमुखैः तृणासुरो वत्सासुरः अघासुर इत्येवमादिभिर्दैत्यैर्हेतुभिर्मुहुर्मुदितः तेषां हननेन अभीक्ष्णं सन्तुष्टः मुकुन्दः अद्भुतमाश्चर्यं पुण्यं पावनं पुण्यजनेन्द्रस्य यक्षेश्वरस्यापि मान्यं श्लाघनीयं चैत्ररथचारुत्वात्तद्वनं बृन्दावनं रामेण बलदेवेन सह अभुङ्क्त भुङ्क्ते स्म ॥ ४४ ॥

सपक्षेति ॥ गोपास्सपक्षकैलासनिभस्य पक्षसहितकैलासतुल्यस्य बकस्य बकरूपधारिणः कृष्णेन हतस्य पक्षान् पतत्राणि कीदृशान् वने तस्मिन् तदन्यान् बकव्यतिरिक्तानपि घोरवृत्तीन् क्रूरचरितान् धेनुकादीन् क्षेप्तुं निरसितुं प्रवृत्ताः केतुमालाः उत्पातराजीरिव स्थितान् अभितस्सर्वतो वृक्षाग्रादिषु बबन्धुः लीलार्थं इतरत्रासार्थञ्च बध्नन्ति स्म ॥ ४५ ॥

पुर इति ॥ तत्र नन्दकुले गोपकन्याः कयापि स्पृहया किञ्चित्फलोद्देशेन जगतां प्रसूतेः लोकानामुपादानभूतस्य (प्रसूयन्तेऽस्मिन्नित्यधिकरणे क्तिन्प्रत्ययः) पुंसः परमपुरुषस्य प्रसत्त्यै प्रसादाय मङ्गलगीतवाद्यैः पुरस्कृतं पूजितं किञ्चन कन्याव्रतं कन्याभिरनुष्ठेयं व्रतं अन्वतिष्ठत् ॥ ४६ ॥

निशात्ययस्नानसमुद्यतानां निक्षिप्तमाभीरकिशोरिकाणाम् ।
कुलादुपादाय दुकूलजालं कुन्दाधिरूढो मुमुदे मुकुन्दः ॥ ४७

सचैकहस्तप्रणतिं विधून्वन् क्षौमार्थिनीनां हरिरङ्गनानाम् ।
अन्योन्यहस्तार्पणसंप्रवृत्तैः जेता जहासाञ्जलिभिस्तदीयैः ॥ ४८

प्रसुप्तमुद्बोधयता परत्वं वीरश्रियो विभ्रममण्डनेन ।
नाळादिनिर्वेशनिधानधाम्ना नाथो बभासे नवयौवनेन ॥ ४९

---

निशेति ॥ मुकुन्दः निशात्ययस्नाने व्रताङ्गभूतप्रातस्स्नाने समुद्यतानां समुद्युक्तानां आभीरकिशोरिकाणां गोपकन्यकानां निक्षिप्तं विसृज्य न्यस्तं दुकूलजालं क्षौमसमूहं कूलाद्यमुनातीरात् उपादाय कुन्दं माध्यतरुं अधिरूढस्सन्मुमुदे । विवसनानां तासां स्वैरदर्शनं भविष्यतीति प्रमुदितोऽभूदित्यर्थः ॥ ४७ ॥

सचेति ॥ जेता जयशीलः सः हरिः क्षौमार्थिनीनां जलादुत्तीर्य कुन्दतलमागत्य क्षौमाण्यर्थयमानानामङ्गनानां एकहस्तप्रणतिं कराभ्यां गोप्याङ्गं तिरोधाय कुन्दमूलमागतासु तासु भवतीभिर्नमस्कारे कृते दीयत इति स्वेनोक्ते एकहस्तेन गोप्यमङ्गं तिरोधाय तदन्येनैकहस्तेन क्रियमाणां प्रणतिं विधून्वन् हस्तद्वयेन प्रणतिं विना न दीयत इति वा प्रणतिमनङ्गीकुर्वन् सन् अन्योन्यहस्तार्पणसम्प्रवृत्तैः गोप्याङ्गप्रकाशभिया स्वहस्तद्वयेनांजलिबन्धमकुर्वतीनां तासां द्वयोर्द्वयोः परस्परस्य एकैकहस्तार्पणेन सुनिष्पन्नैस्तदीयैरंजलिभिर्जहास अत्रापि कश्चिदुपायश्चिन्तितो बालिकाभिरिति हासञ्चकारेत्यर्थः ॥ ४८ ॥

प्रेति ॥ नाथः कृष्णः प्रसुप्तं शैशवेत्यद्भुतचरित्राणां किञ्चित्प्रदर्शनादनभिव्यक्तं परत्वं परब्रह्मभावं उद्बोधयता अभिव्यञ्जयता गोवर्धनोद्धरणादीनामद्भुतचरित्राणां भावित्वात् वीरश्रियः शौर्यलक्ष्म्याः विभ्रममण्डनेन विलासार्थेनालङ्कारेण चाणूरमर्दनादिना तदुन्मेषभावित्वात् । नीळादीनां वल्लवीनां निर्वेशस्य उपभोगस्य निधानधाम्ना निक्षेपस्थानभूतेन नवयौवनेन बभासे । पञ्चवर्षपर्यन्तशैशवात्ययमात्रमेवात्र यौवनोचिताकारविहारयोगाद्यौवनं विवक्षितम् । न तु मुख्ययौवनम् । अष्टमवयसि कंसवधादिलीलायाः पुराणप्रसिद्धेः ॥ ४९ ॥

विहारपर्वक्रमचारु शौरेः कल्यं वयः कामगृहीतियोग्यम् ।
मनोभिरास्वाद्यतमं प्रपेदे माधुर्यमिक्षोरिव मध्यभागः ॥ ५०

समाश्रितां विभ्रमसैन्यभेदैः कान्त्या स्वया कल्पितचारुवप्राम् ।
व्रजस्त्रियः कृष्णमयीं व्यजानन् क्रीडार्गळां क्षेमपुरीमपूर्वाम् ॥

वंशस्वनो वत्सविहारपांसुस्सन्ध्यागमस्तस्य च वन्यवेषः ।
आयाति कृष्णे व्रजसुन्दरीणामासीच्चतुष्कन्धमनङ्गसैन्यम् ॥ ५२

---

विहारेति ॥ विहाराणां क्रीडानामुत्तरोत्तरमुत्कृष्यमाणानां पर्वक्रमेण तारतम्यपरिपाट्या चारु क्रमसंवर्धमानक्रीडाभेदमनोहरं कामस्य मन्मथस्य गृहीतौ परिग्रहे योग्यं मन्मथाधिष्ठेयं शौरेः कल्यश्चतुरं वयो यौवनं (कर्तृ) इक्षोरिक्षुदण्डस्य मध्यभाग इव मनोभिः आस्वाद्यतममतिशयेनास्वाद्यं माधुर्यं रुचिरत्वं प्रपेदे प्राप । माधुर्यमपीक्षोर्मध्यभाग एवातिशयितमिति भावः ॥ ५० ॥

समाश्रितामिति ॥ व्रजस्त्रियः गोकुलाङ्गनाः विभ्रमसैन्यभेदैः भ्रूनयनादि विभ्रमा एव सैन्यविशेषास्तैस्समाश्रितां स्वया आत्मीयया कान्त्या कल्पितचारुवप्रां निर्मितरुचिरप्राकारां प्राकारमूलबन्धवाचिना वप्रशब्देन प्राकारमात्रं विवक्ष्यते । क्रीडा गोपीवस्त्रापहारादिविहार एवार्गळा यस्यास्तां कृष्णमयीं कृष्णरूपामपूर्वां क्षेमपुरीं क्षेमस्य कुशलस्यानन्दस्य राजकुलस्य नगरीं व्यजानन् कृष्णस्य निरतिशयसम्भोगानन्दहेतुतया तमानन्दसाम्राज्यपुरीमध्यगच्छन्नित्यर्थः ॥ ५१ ॥

वंशेति ॥ कृष्णे आयाति वत्सपालैस्सह क्रीडित्वा वत्सानां पश्चात्सायमागच्छति सति वंशस्वनस्सन्निकर्षाच्छ्रूयमाणः कृष्णस्य वेणुध्वनिः वत्सविहारपांसुः गृहं प्रत्यागच्छतां वत्सानां विहारेणोत्थितो रेणुः सन्ध्यागमस्सन्ध्यायां रात्रिकालसन्निकृष्टायां तस्यागमनं वन्यवेषः पल्लवमयूरपिञ्छादिरूपश्चेति व्रजसुन्दरीणां व्रजाङ्गनानां चतुष्कन्धं चतुर्व्यूहमनङ्गसैन्यमभूत् चत्वार्यपि तासामुद्दीपकान्यभवन्नित्यर्थः ॥ ५२ ॥

अनुश्रवाणामवतंसभूतं बर्हावतंसेन विभूषयन्ती ।
अदिव्यया चर्मदृशैव गोपी समाधिभाजामभजत्समाधिम् ॥ ५३

कलापिनां कल्पितमाल्यभावैः पत्रैस्तदा पत्रलदेहकान्तिम् ।
अवाप्य सञ्चारितमालमाद्यं छायात्मतां प्रापुरिवास्य गावः ॥ ५४

वितन्वता मान्मथमिन्द्रजालं पिञ्छेन तापिञ्छनिभो बभासे ।
अनेकरत्नप्रभवेन धाम्ना शारात्मना शैलइवैन्द्रनीलः ॥ ५५

---

अन्विति ॥ गोपी केनचिद्व्याजेन तत्परिचयमिच्छन्ती काचनगोपतरुणी अनुश्रवाणां वेदानामवतंसभूतमुत्तमाङ्गाभरणमिव स्थितं भूतशब्दोऽपि निभादि-शब्दवत्सादृश्यवाची वेदान्तप्रतिपाद्यमिति यावत् कृष्णं बर्हावतंसेन मयूरपिञ्छ-रूपेणावतंसेन विभूषयन्ती सती अदिव्यया चर्मदृशैव प्राकृतचर्मलोचनेनैव समा-धिभाजां योगिनां समाधिमभजत । योगिनोऽपि योगाभ्याससंस्कृतया दिव्यया प्रत्यग्दृष्ट्या एकाग्रेण समाधिं भजन्तं इयं त्वयत्नाच्चर्मदृष्टयैव समाधिमभजत् मयूरपिञ्छप्रयुक्तशोभाविशेषमनन्यमनाः निर्निमेषं दृष्ट्वैव स्थितवतीत्यर्थः ॥ ५३ ॥

प्रसङ्गाद्देवस्य मयूरपिञ्छाभरणानि श्लोकचतुष्टयेन वर्णयति कलापिना-मिति ॥ गावो नन्दस्य सुरभयः कल्पितो माल्यभावो येषान्तैर्माल्यरूपेण ग्रथितैः कलापिनां पत्रैर्मयूरपिञ्छैः पत्रलदेहकान्ति पत्रं लाति आदत्त इति पत्रला पत्रवती देहकान्तिर्यस्य तं मेदुरदेहकान्तिमिति यावत् आद्यं सञ्चारितमालं जङ्गम तापिञ्छवृक्षं कृष्णमिति भावः (अतएव निगीर्याध्यवसानादतिशयोक्तिः) अवाप्य सम्प्राप्य कृष्णस्य छायात्मतां प्रापुरिव छायावत्तमेवान्वसरन्नित्यर्थः ॥ ५४ ॥

वितन्वतेति ॥ तापिञ्छनिभस्तमालश्यामलः कृष्णः मान्मथं मन्मथ-संबन्धि इन्द्रजालं द्रष्टृजनव्यामोहकं 'देशकालापरोक्ष्यं यत् परोक्षस्यैव वस्तुनः । मन्त्रौषधक्रियाभेदैरिन्द्रजालं प्रचक्षते'। वितन्वता विस्तारयता पिञ्छेन (ऐन्द्र-जालिकामयूरपिञ्छभ्रमणेन द्रष्टॄन् व्यामोहयन्तीति प्रसिद्धिः) अनेकरत्नप्रभवेन वज्रवैडूर्यमरकतादिबहुविधरत्नप्रभवेन अतएव शारात्मना विचित्ररूपेण धाम्ना तेजसा ऐन्द्रनीलशैल इव इन्द्रनीलमयपर्वत इव बभासे भाति स्म ॥ ५५ ॥

मुहुः स्पृशन्ती मुमुदे यशोदा मुग्धाङ्गनामोहनवांशिकेन ।
मनीषिणा माङ्गलिकेन यूना मौलौ धृतां मण्डनबर्हमालाम् ॥
कृतास्पदा कृष्णभुजान्तराळे प्रालम्बबर्हावलिराबभासे ।
विशुद्धहेमद्युतिरब्धिकन्या श्यामायमानेव तदङ्गकान्त्या ॥ ५७
साचीकृतानि प्रणयत्रपाभ्यां व्यावृत्तराजीवनिभानि शौरिः ।
सभ्रूविलासानि ददर्श तासां वक्त्राणि वाचालविलोचनानि॥५८
निरङ्कुशस्नेहरसानुविद्धान्निष्पन्दमन्दालसनिर्निमेषान् ।
वंशेन कृष्णः प्रतिसम्बभाषे वार्ताहरान् वामदृशां कटाक्षान् ॥

---

**मुहुरिति** ॥ यशोदा मुग्धांगनानां मोहनेन मोहजनकेन वांशिकेन (वंशशिल्पमस्येति वांशिकस्तेन) वंशवादकेन वंशनादैर्मुग्धानाम्मोहजनकेनेत्यर्थः। मनीषिणां विदुषां माङ्गलिकेन (मङ्गलं प्रयोजनमस्येति माङ्गलिकस्तेन) क्षेमङ्करेण यूना तरुणेन कृष्णेन मौलौ धृतां मण्डलबर्हमालां अलङ्कारभूतां पिञ्छमालां मुहुः स्पृशन्ती वात्सल्यात्पुनः पुनः स्पृशन्ती सती मुमुदे मोदते स्म ॥ ५६॥

**कृतेति** ॥ कृष्णस्य भुजान्तराळे वक्षसि कृतास्पदा स्थिता प्रालम्बबर्हावलिः लम्बमानकण्ठाभरणरूपा बर्हावलिः विशुद्धहेमद्युतिः स्वतो निष्कलङ्ककनकरुचिः तस्य कृष्णस्याङ्गकान्त्या श्यामायमाना श्यामाभवन्ती अब्धिकन्या लक्ष्मीरिव आबभासे भाति स्म ॥ ५७ ॥

**साचीकृतानीति** ॥ शौरिः कृष्णः प्रणयत्रपाभ्यां अनुरागेण लज्जया च साचीकृतानि तिर्यक्कृतानि 'वदति हि संवृतिरेव कामिता'मिति न्यायात् वदनसाचीकरणं त्रपाया इवानुरागस्याप्यनुभावः अतएव व्यावृत्तराजीवनिभानि विवलितारविन्दतुल्यानि सभ्रूविलासानि भ्रूविलाससहितानि वाचालविलोचनानि वाचालानि बहुभाषीणि तिर्यगवलोकनभेदैस्स्फुटमनुरागं सूचयन्ति विलोचनानि येषान्तानि तासां व्रजवधूनां वक्त्राणि ददर्श ॥ ५८ ॥

**निरंकुशेति** ॥ कृष्णः निरंकुशस्नेहरसानुविद्धान् निर्यन्त्रणप्रेमरसरूषितान् निष्पन्दाः स्वविषयादन्यत्र विषये अस्पन्दमानाः मन्दाः मदमन्थराः

अशिक्षितं तुम्बुरुनारदाद्यैराभीरनाट्यं नवमास्थितेन ।
जगे सलीलं जगदेकधाम्ना रागाब्धिना रञ्जयतेव विश्वम् ॥ ६०
अपत्रपासैकतमाश्रितानां रागोदधौ कृष्णमुखेन्दुनुन्ने ।
हस्तावलम्बो न बभूव तासामुत्पक्ष्मणामुत्कलिकाप्लुतानाम् ॥

---

अलसाः व्रीडेन विषयान्तरावृत्तिमन्तः । 'आलस्यन्तदभीष्टार्थाद्व्रीडादेर्यन्निवर्तनं' । निर्निमेषाः निमेषरहिताश्च तान् । वामदृशां रुचिरलोचनानामङ्गनानां वार्ताहरान् सम्भोगप्रार्थनरूपतदीयवार्ताहरान् स्फुटमेव सम्भोगेच्छासूचकत्वात्तथा व्यपदेशः । कटाक्षानवलोकविशेषान् 'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तद्वदन्ति प्रचक्षते' इति वंशेन प्रतिसन्दधे वेणुवादनविलासेन तत्प्रार्थनाङ्गीकारं सूचयामासेत्यर्थः ॥ ५९ ॥

अशिक्षितमिति ॥ तुम्बुरुनारदाद्यैर्गान्धर्वशास्त्राभिज्ञैः अशिक्षितमनभ्यस्तं नवं नूतनं आभीरनाट्यं आभीरभावाभिनयं (सएव नाट्यत्वेनाध्यवसितः) आस्थितेन अवलम्बितवता रागाब्धिना 'योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः । रञ्जको जनचित्तानां स रागः कथ्यते बुधैः ॥' इत्युक्तलक्षणानां श्रीरागादीनामब्धिवन्निधानभूतेन अतएव विश्वं कृत्स्नं चेतनाचेतनमपि प्रसक्तं रञ्जयतेव स्थितेन जगदेकधाम्ना जगतामेकेनावासस्थानेन कृष्णेन सलीलं यथा तथा जगे गीयते स्म ॥ ६० ॥

अपेति ॥ कृष्णमुखेन्दुना नुन्ने उत्तरलीकृते रागोदधौ अपत्रपा अन्यतो लज्जैव सैकतं पुलिनं तदाश्रितानां तदाश्रयाणां रागाब्धौ निमज्जनं प्राप्तानां उत्कलिकाप्लुतानां उत्कण्ठाभरितानां पक्षे कल्लोलाप्लुतात्मनां 'सर्वेन्द्रियसुखास्वादो यत्रास्तीति मनस्स्त्रियाः । तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः' इति । उत्पक्ष्मणां तन्मुखैकदत्तदृष्टितया पक्षे उत्तारयितृदिदृक्षया च उन्नमितपक्ष्मणां तासां हस्तावलम्बो रागोदधिमुत्तरितुं हस्तस्य कश्चिदवलंबः न बभूव । ततश्चान्यस्य हस्तावलम्बस्याभावादाश्रितस्य त्रपा सैकतस्य कृष्णमुखेन्दूदयतरलीभवदुत्कलिकाशतग्रस्ततया विनश्वरत्वात्तासां तदभिसरणरूपं रागोदधौ निमज्जनमेव प्रसक्तमिति भावः ॥ ६१ ॥

अयन्त्रितस्वैरगतिस्स तासां सम्भावितानां करपुष्करेण ।
प्रस्विन्नगण्डः प्रणयी चकाशे मध्ये वशानामिव वारणेन्द्रः ॥ ६२

विमोहने वल्लवगेहिनीनां न ब्रह्मचर्यं विभिदे तदीयम् ।
सम्पत्स्यते बालकजीवनं तत्सत्येन येनैव सतां समक्षम् ॥ ६३

स्वसम्भवं कृष्णमवेक्षमाणो बन्धुप्रसूतञ्च बलं व्रजेशः ।
निसर्गमैत्र्या नियतैकभावौ न्ययुङ्क्त तौ वत्सकुलानि गोप्तुम् ॥

---

अयन्त्रितेति ॥ अयन्त्रितस्वैरगतिः कमप्यनियमितस्वैराचरणः प्रणयी अनुरागवान् प्रस्विन्नगण्डः सात्त्विकभावरूपस्वेदोल्लसितगण्डः वारणेन्द्रपक्षे मदोद्रेकादव्याहतस्वैरगमनः क्लिन्नगण्डश्चेति योज्यम् । स कृष्णः करपुष्करेण कराम्बुजेन नागपक्षे कराग्रेण सम्भावितानामुपलालितानां तासां गोपवधूनां मध्ये वशानां करिणीनां मध्ये वारणेन्द्र इव चकाशे अभिसरणार्थमागतास्तास्सर्वाः रमयामासेत्यर्थः ॥ ६२ ॥

विमोहन इति ॥ वल्लवगेहिनीनां गोपभार्याणां विमोहने सम्भोगेऽपि 'सुरतं मोहनं प्रोक्तं' इति हलायुधः । तदीयं तस्य कृष्णस्येदं ब्रह्मचर्यं स्त्रीसङ्गराहित्यरूपं न बिभिदे न श्लथमासीत् । भिदेः कर्मकर्तरि लिट् । सत्येन अबाधितेनैव येन ब्रह्मचर्येण सतां व्यासादीनां समक्षं तत्प्रसिद्धम् । यदश्वत्थामास्त्रविप्लुष्टमिति भावः । बालकजीवनं उत्तरागर्भच्युतस्य परीक्षितो जीवनं सम्पत्स्यते सम्पन्नं भविष्यति 'यदि मे ब्रह्मचर्यं स्यात् सत्यं च मयि तिष्ठति । अव्याहतं ममैश्वर्यं तेन जीवतु बालकः ॥ पादेन कमलाभेन ब्रह्मरुद्रार्चितेन च । परपर्श पुण्डरीकाक्ष आपादतलमस्तकम् ॥' इति कृष्णेन पदास्पृष्ट परीक्षिज्जीवनं प्रतिलेभ इति भारते कथा । सम्पत्स्यत इति विमोहनकालमपेक्ष्य लृट्प्रयोगः । तथा च ब्रह्मचर्येण दग्धबालकोज्जीवनमेव तदस्खलने प्रमाणमिति भावः ॥ ६३ ॥

स्वेति ॥ व्रजेशः नन्दः कृष्णं स्वसम्भवं स्वात्मजमवेक्षमाणः बलं बलरामञ्च बन्धुप्रसूतं स्नेहाद्वसुदेवो बन्धुरिति बन्धुसुतमवेक्षमाणस्सन्नित्यर्थः । उभयोर्नियोगार्हतां पश्यन्नित्यर्थः । निसर्गमैत्र्या स्वभावसिद्धेन स्नेहेन नियतैक-

अनन्यतन्त्रस्स्वयमेव देवान् पद्मासनादीन् प्रजनय्य रक्षन् ।
सरक्षकस्सीरभृता सहासीन्नेता गवां नन्दनियोगवर्ती ॥ ६५

कथं व्रजेच्छर्करिलान् प्रदेशान् पद्भ्यामसौ पल्लवकोमलाभ्याम् ।
इति स्नुतस्तन्यरसा यशोदा चिन्तार्णवे न प्लवमन्वविन्दत् ॥ ६६

विहारवित्रासितदुष्टसत्त्वौ मृगेन्द्रपोताविव धीरचेष्टौ ।
बभूवतुश्शाश्वतिकेन भूम्ना बालौ युवानाविव तौ बलाढ्यौ ॥

---

भावौ नियतः स्थिरः एकः एकरूपोऽर्थान्तररहितो भावोऽभिप्रायो ययोस्तौ तौ रामकृष्णौ वत्सकुलानि वत्सगणान् गोप्तुं रक्षितुं न्ययुङ्क्त नियुङ्क्ते स्म ॥ ६४ ॥

अनन्येति ॥ अनन्यतन्त्रः अनन्याधीनः स्वयमेव स्वेच्छामात्रेण पद्मासनादीन् ब्रह्मादीन् प्रजनय्य उत्पाद्य रक्षन् सः नेता नाथः नन्दनियोगवर्ती नन्दस्य नियोगे वर्तमानस्सन् सीरभृता बलदेवेन सह गवां रक्षक आसीत् नन्दन बाल इति वत्सपालनमात्रे नियुक्तो गवामपि रक्षक आसीदिति तदादरातिशयो दर्शितः ॥ ६५ ॥

कथमिति ॥ स्नुतस्तन्यरसा कृष्णे नन्दनियोगेन गोवत्सानां रक्षणाय वनं प्रति प्रतिष्ठमाने वात्सल्येन प्रस्नुतस्तनोद्भवरसा यशोदा (कर्त्री) असौ कुमारः पल्लवकोमलाभ्यां पद्भ्यां शर्करिलान् शर्करावतः प्रदेशान् अरण्यप्रदेशान् कथं व्रजेत् गन्तुं शक्नुयात् इति चिन्तैवार्णवस्तस्मिन् प्लवन्तरणोपायमुडुपं नान्वविन्दत् न लेभे । दुस्तरे चिन्तार्णवे मग्नाभूदित्यर्थः ॥ ६६ ॥

विहारेति ॥ मृगेन्द्रपोतौ सिंहशावकाविव धीरचेष्टौ उदारचरितौ सिंहशाववद्वने व्याघ्रादीनलक्षीकृत्य संचरन्तावित्यर्थः । विहारेण मृगयादिरूपेण वित्रासिताः उद्वेजिताः दुष्टसत्त्वाः व्याघ्रादयो याभ्यान्तौ बालौ रामकृष्णौ शाश्वतिकेन नित्यसिद्धेन भूम्ना महिम्ना परब्रह्मभावरूपेण युवानाविव बलाढ्यौ बलसमृद्धौ बभूवतुः ॥ ६७ ॥

सिन्दूरितौ वत्सपरागजालैस्सितासितौ बालगजाविव द्वौ ।
उदारलीलावुपलक्ष्य गोप्यस्सर्वास्तदानन्यवशाबभूवुः ॥ ६८

गोपायमाने पुरुषे परस्मिन् गोरूपतां वेदगिरो भजन्त्यः ।
भव्यैरसेवन्त पदं तदीयं स्तोभप्रतिच्छन्दनिभैः स्वशब्दैः ॥ ६९

अबालिशो बालिशवत्प्रजानां प्रख्यापयन्नात्मनि पारतन्त्र्यम् ।
न्यदर्शयद्विश्वपतिः पशूनां बन्धे च मोक्षे च निजं प्रभुत्वम् ॥

---

सिन्दूरिताविति ॥ तदा वत्सपरागजालैः वत्सानां खुरोत्थापितैः पांसुपुञ्जैः सिन्दूरितौ सितासितौ धवळमेचकौ बालगजौ कलभाविव स्थितौ उदारलीलौ रमणीयचेष्टौ तौ द्वौ रामकृष्णौ उपलक्ष्य सर्वाः गोप्यः अनन्यवशाः अनन्यायत्ताः तदुभयमात्राधीनाः बभूवुः ॥ ६८ ॥

गोपायमान इति ॥ परस्मिन् पुरुषे परमात्मनि गोपायमाने गोपवदाचरति सति वेदगिरो गोरूपतां गवाकारतां भजन्त्यः आश्रयन्त्यस्सत्यः स्तोभप्रतिच्छन्दनिभैः सामवेदऋगक्षरव्यासमामभागगूरणार्थैः हाउ हाउ इत्यादयश्शब्दास्स्तोभास्तत्प्रतिच्छन्दनिभैः अर्थराहित्येन तत्प्रतिबिम्बैरिव स्थितैः । उपमोपक्रमोत्प्रेक्षायामित्युत्प्रेक्षायामपि निभशब्दप्रयोगः । भव्यैश्शुभैः स्वशब्दैस्तदीयं पदमसेवन्त नन्दकुले गवाकृत्या वेदगिरोवतीर्य हुंकारवैर्भगवच्चरणसेवामकुर्वन्नित्यर्थः ॥ ६९ ॥

अबालिश इति ॥ अबालिशः अबालः आदिपुरुषत्वात् बालिशवत् बालेन तुल्यं यथा तथा 'बालिशो बालमूर्खयोः' इति वैजयन्ती । आत्मनि स्वस्मिन् पारतन्त्र्यं पशुपालनरूपं प्रजानां जनानां प्रख्यापयन् प्रकाशयन् विश्वपतिरखिलनायकः कृष्णः पशूनां संसारिणां 'आत्मानः पशवः प्रोक्तास्सर्वे संसारवर्तिनः' इति पुराणवचनात् । बन्धे च मोक्षे च संसरणे संसारादुत्तारणे च निजमात्मीयं प्रभुत्वं न्यदर्शयत् उदाहरणमुखेन दर्शितवान् गोमहिष्यादीनां पशूनां बन्धमोक्षकरणमेव संसारिरूपिणां पशूनां बन्धमोक्षयोस्तस्य प्रभुत्वे उदाहरणमभूदित्यर्थः ॥ ७० ॥

आत्मोपमर्देप्यनुमोदमानादात्माधिकं पालयतश्च वत्सान् ।
गावस्तदानीमनघामविन्दन् वात्सल्यशिक्षामिव वासुदेवात् ॥

योऽसावनन्तप्रमुखैरनन्तैर्निर्विश्यते नित्यमनन्तभूमा ।
वैमानिकानां प्रथमस्सदेवो वत्सैरलेलिह्यत वत्सलात्मा ॥ ७२

महीयसा मण्डितपाणिपद्मं दध्यन्नसारेण मधुप्लुतेन ।
दृष्ट्वा ननन्दुः क्षुधयान्वितास्तं वत्सानुचर्यासु वयस्यगोपाः ॥

आत्मेति ॥ तदानीं कृष्णस्य पशुपालनसमये गावः आत्मोपमर्देपि स्वस्य पदाक्रमणलेहनादिना पीडनेप्यनुमोदमानात् श्लाघमानात् आत्माधिकं स्वस्मादधिकं यथा तथा वत्सान् पालयतः स्वकीयक्षुत्पिपासादिसत्त्वेपि वत्सानेव तृणचर्वणादिना पोषयतश्च वासुदेवात् कृष्णात् अनघां वात्सल्यशिक्षां सम्यग्वत्सेषु वात्सल्याभ्यासं अविन्दन्निव लेभिर इव । वत्सेषु तत्तन्मातृभ्यः कदाचित् स्तनदंशनादौ चरणघातादि कुर्वतीभ्यः स्वक्षुधायां वत्सानविचार्य तृणचर्वणादिकुर्वतीभ्यश्च कृष्णस्यैवाधिकं वात्सल्यं व्यक्तमासीदित्यर्थः ॥ ७१ ॥

य इति ॥ अनन्तभूमा अनवधिकमहिमा योऽसौ अनन्तप्रमुखैरनन्तगरुडविष्वक्सेनादिभिः अनन्तैरसंख्यैर्नित्यमुक्तैः नित्यं सदा निर्विश्यते साक्षात्कारेणोपभुज्यते वैमानिकानां विमानेन चरतां प्रथमः प्रवरः आदिमो वा सदेवो वासुदेवः वत्सलात्मा वात्सल्यार्द्रहृदयस्सन् वत्सैः अलेलिह्यत पौनःपुन्येनालिह्यत । क्रियासमभिहारे यङि कर्मणि लङ् । विचित्रा भगवतः क्रीडेति भावः ॥

महीयसेति ॥ वत्सानां अनुचर्यासु अनुव्रज्यासु क्षुधया अन्विताः क्षुधायुक्ताः वयस्यगोपास्सवयसो गोपाः गोपकुमाराः महीयसा अतिशयेन महता मधुप्लुतेन क्षौद्रसिक्तेन दध्यन्नसारेण दधिसिक्तान्नवरेण मण्डितपाणिपद्ममलङ्कृतपाणिकमलं तं कृष्णं दृष्ट्वा ननन्दुः नन्दति स्म । वयस्यानां क्षुधासु दध्यन्नं दत्वा तान्सन्तर्पयामासेत्यर्थः ॥ ७३ ॥

स्वादूनि वन्यानि फलानि तैस्तैः स्निग्धैरुपानीय निदर्शितानि ।
रामाय पूर्वं प्रतिपाद्य शेषैस्स पिप्रिये सादरभुज्यमानैः ॥ ७४
ताभ्यां तदा नन्दनिदेशिताभ्यां रक्षावतीं रामजनार्दनाभ्याम् ।
विशेषभोग्यामभजद्विभूतिं बृन्दावनं व्यापृतधेनुबृन्दम् ॥ ७५
अगाधकासारमहीनशष्पमतीक्ष्णसूर्यं तदचण्डवातम् ।
प्रच्छायनिद्रायितधेनुवत्सं प्रौढे निदाघेऽपि बभूव भोग्यम् ॥
न व्याधिपीडा न च दैत्यशङ्का नासीद्गवां व्याघ्रभयञ्च तस्मिन् ।
स्वबाहुकल्पेन बलेन सार्धं नारायणे रक्षति नन्दलक्ष्मीम् ॥ ७७

---

**स्वादूनीति** ॥ स कृष्णः स्वादूनि मधुराणि तैस्तैः स्निग्धैर्गोपकिरातादिभिः उपानीय आहृत्य निदर्शितानि इदमधुरमिदममधुरमिति प्रदर्शितानि वन्यानि वनोद्भवानि फलानि पूर्वं रामाय प्रतिपाद्य सादरं भुज्यमानैश्शेषैः बलदेवभुक्तशेषैः पिप्रिये प्रीतोऽभूत् ॥ ७४ ॥

**ताभ्यामिति** ॥ तदा तस्मिन् काले व्यापृतधेनुबृन्दं सञ्चरद्गोश्रेणिकुटुंबं बृन्दावनं नन्देन निदेशिताभ्यां नियुक्ताभ्यां ताभ्यां रामजनार्दनाभ्यां रक्षावतीं वातोष्णमृगशकुन्तकिरातादिभ्यस्त्राणवतीं विशेषभोग्यां सौरभ्यमाधुर्याद्याधिक्यादतिशयेनोपभोग्यां विभूतिं पुष्पफलादिसमृद्धिं अभजत् प्राप ॥ ७५ ॥

**अगाधेति** ॥ अगाधाः अतलस्पर्शिनः कासारास्सरांसि यस्मिन् तथोक्तं अहीनशष्पं समृद्धबालतृणं अतीक्ष्णसूर्यं अतीव्रतपनं अचण्डवातं ग्रीष्मकालीनेन महावातेन रहितं प्रच्छायनिद्रायितधेनुवत्सं प्रकृष्टा छाया येषु तानि प्रच्छायानि वटमूलादीनि तेषु निद्रायिताः निद्रावन्तो भूताः धेनवः वत्साश्च यस्मिन् । तत् बृन्दावनं प्रौढे कठोरे निदाघे ग्रीष्मेपि भोग्यं कासारशोषादिदोषाभावादुपभोग्यं बभूव ॥ ७६ ॥

**नेति** ॥ तस्मिन् बृन्दावने नारायणे कृष्णे स्वबाहुकल्पेन स्वबाहुतुल्येन तद्वत्सहकारिणा बलेन बलदेवेन सार्धं नन्दस्य लक्ष्मीं गोधनादिरूपां रक्षति सति

निरीतयस्ते निरपायवाञ्छाः निःश्रेयसादप्यधिकप्रमोदाः ।
प्रपेदिरे पूर्वयुगानुभूतिं गोपास्तदा गोप्तरि वासुदेवे ॥ ७८

वत्सानुचर्याचतुरस्य काले वंशस्वनैः कर्णसुधां विधातुः ।
गतागतप्राणदशामविन्दन् गोपीजनास्तस्य गतागतेषु ॥ ७९

आघ्रातवर्त्मानमरण्यभागेष्वारण्यकैराश्रितधेनुभावैः ।
केनापि तस्यापहृतं किरीटं प्रत्याहरन् प्रैक्षत पत्रिनाथः ॥ ८०

---

गवां व्याधिपीडा आसीत् । दैत्यशङ्का च असुरैर्गवादीनामपहारशङ्का च नासीत् । व्याघ्रभयञ्च गवां भक्षकेभ्यो व्याघ्रादिदुष्टसत्वेभ्यो भयञ्च नासीत् ॥ ७७ ॥

निरिति ॥ तदा वासुदेवे गोप्तरि सति । निरीतयः "अतिवृष्टिरनावृष्टिर्मूषिकाश्शलभाश्शुकाः । अत्यासन्नाश्च राजानष्षडेते हीतयस्स्मृताः" इत्युक्तरूपेतिबाधारहिताः । निरपायवाञ्छाः अभ्रंशफलाभिलाषाः अतएवानर्थनिवृत्तेरर्थप्राप्तेश्च पुरुषार्थस्य पाष्कल्येन निःश्रेयसादप्यपवर्गादप्यधिकप्रमोदा अतिशयितहर्षाः ते गोपाः अपूर्वयुगानुभूतिं प्रपेदिरे युगचतुष्टयेप्येवमवस्थानस्य दुर्लभत्वात्तद्विलक्षणमलौकिकयुगानुभवं प्रापुः ॥ ७८ ॥

वत्सेति ॥ गोपीजनाः वत्सानामनुचर्यायामनुचरणे चतुरस्य क्षमस्य काले उचितसमये वंशस्वनैः वेणुनादैः कर्णसुधां कर्णामृतं विधातुः कुर्वतः (तृन्नत्ययोयमिति षष्ठीप्रतिषेधाद्द्वितीया) तस्य कृष्णस्य गतागतेषु गमनागमनेषु गतागतप्राणदशां यथासङ्ख्यङ्गमने गतप्राणामागमने आगतप्राणाञ्च दशां अविन्दन् प्रापुः क्षणमपि तद्विरहं न सेहिर इत्यर्थः ॥ ७९ ॥

आघ्रातेति ॥ अरण्यभागेष्वरण्यप्रदेशेषु आश्रितधेनुभावैः धेनुभावमाश्रित्य चरद्भिः आरण्यकैः अरण्यगेयैर्वेदान्तभागैः आघ्रातवर्त्मानमाघ्रातमार्गं कृष्णमिति शेषः । नन्दव्रजे धेनुभावमाश्रित्य कृष्णसेवार्थञ्चरतो वेदान्ताः कृष्णे परब्रह्मणि तात्पर्यगौरवात्तस्य गमनमार्गमप्याजिघ्रन्निति भावः । तस्य कृष्णस्य केनापि दैत्येन अपहृतं किरीटं मकुटं प्रत्याहरन् कृष्णायार्पयितुं ततो दैत्याद्गृहीत्वा पुनराहरन् पत्रिनाथो गरुडः प्रैक्षतापश्यत् । कृष्णाय मकुटमर्पयितुमेव तमन्वि-

देवस्य दुग्धोदशयस्य दैत्याद्वैरोचनाद्व्याळभुजोपनीतः ।
कृष्णस्य मौळौ कृतबर्हचूडे न्यस्तः किरीटो निबिडी बभूव ॥८१

समाहितैरग्निषु यायजूकैराधीयमानानि हवींषि भोक्ता ।
भक्तैकलभ्यो भगवान् कदाचित्पत्नीभिरानीतमभुङ्क्त राज्यम् ॥

करांबुजस्पर्शनिमीलिताक्षानामर्शनैराकलितार्धनिद्रान् ।
वत्साननन्याभिमुखान् स मेने ब्रह्माकृतीन् भक्तिभरावनम्रान् ॥

---

भ्यगच्छन् तं दृष्टवानित्यर्थः । पुरा क्षीरार्णवे निद्राणस्य पुरुषोत्तमस्य किरीटं बलिनापहृतं गरुडेन पुनस्ततो गृहीत्वा कृष्णावतारे प्रत्यर्पितमिति पौराणिकी कथा ॥ ८० ॥

देवस्येति ॥ वैरोचनात् विरोचनानुबन्धिनस्तत्पुत्रात् दैत्याद्बलेः व्याळभुजा सर्पभोजिना गरुडेनोपनीतः दुग्धोदशयस्य क्षीरसागरशायिनः परमपुरुषस्य किरीटः कृतबर्हचूडे रचितबर्हावतंसे कृष्णस्य मौळौ शिरसि न्यस्तो निहितस्सन् निबिडीबभूव क्षीरोदशायिपुरुषोत्तममौळ्यनुगुणाकारतया स्वतः अनिबिडोऽपि कृष्णमौळ्युचितमाकारमाश्रित्य निबिडो बभूव ॥ ८१ ॥

समाहितैरिति ॥ समाहितैरेकाग्रचित्तैः यायजूकैरिज्याशीलैः अग्निषु आहवनीयादिषु विधीयमानानि हूयमानानि हवींषि चरुपुरोडाशादीनि भोक्ता भोजनशीलवान् (ताच्छील्ये तृन्प्रत्ययः । अतएव तद्योगे द्वितीया) भक्तैकलभ्यः भक्तमात्रलभ्यः भगवान् कृष्णः कदाचिज्जातु पत्नीभिः केषाञ्चिदारब्धयज्ञानामृषीणां पत्नीभिः आनीतमुपाहृतं भोज्यं पायसादिकं अभुङ्क्त भुङ्क्ते स्म । भगवान्विधिवदाहवनीयादिषु चरुपुरोडाशादि हविरेवाभुङ्क्तेति भावः । तदपि यज्वभिरेव होतव्यं न पत्नीभिः । 'न पत्नी जुहुया' दिति प्रतिषेधात् । अथापि भक्तैकपक्षपातित्वात्प्रत्यक्षमेव पत्नीभिरानीतं यत्किञ्चिद्भोज्यमात्रं भुक्तवानिति भावः । इयं कथा भागवते वर्णिता । विभक्तधनेषु विभक्ता भ्रातर इतिवत्समाहितचित्तैरित्यर्थे समाहितैरित्युत्तरपदलोपेन प्रयोग इत्याहुः ॥ ८२ ॥

करेति ॥ स कृष्णः कराम्बुजस्पर्शेन निमीलिताक्षान् सुखात् झटिति निमीलितलोचनान् आमर्शनैः कराम्बुजेन समन्तात्परामर्शैः आकलितार्धनिद्रान्

रोमन्थफेनाञ्चितसृक्विभागैरस्पन्दनैरर्धनिमीलिताक्षैः ।
अनादृतस्तन्यरसैर्मुकुन्दः कण्डूयितैर्निर्वृतिमाप वत्सैः ॥ ८४

सिषेविरे शाद्वलितान् प्रदेशान् कृष्णस्य धाम्ना मणिमेचकेन ।
वसुन्धरायामपि केवलायां व्यापारयन्तो वदनानि वत्साः॥ ८५

नवप्रसूतास्स तदा वनान्ते पयस्विनीरप्रतिमानदोहाः ।
परिभ्रमश्रान्तपदानदूरात्प्रत्यागतान् पाययते स्म वत्सान् ॥ ८६

---

अनन्याभिमुखान् स्वाभिमुखतयैवावतिष्ठमानान् प्रह्वाकृतीन् निद्रासुखेनावनताकृतीन् वत्सान् भक्तिभरेण भक्त्यतिशयेन अवनम्रान् मेने । तथोत्प्रैक्षतेत्यर्थः ॥

**रोमन्थेति ॥** मुकुन्दः रोमन्थो गोमहिष्यादीनान्निगीर्णस्य पुनःपुनरुद्गीर्य भक्षणं तदुद्गतेन फेनेनाञ्चिताः पूजिताः सहिता इति यावत् । तथाभूतास्सृक्विभागा ओष्ठप्रान्तभागा येषां तैः कण्डूयितैः स्वेन कृतकण्डूयनैरतएव कण्डूयनलाभादस्पन्दैः स्पन्दरहितैः अर्धनिमीलिताक्षैः कण्डूयनसुखादर्धनिमीलितलोचनैः अनादृतस्तन्यरसैः वत्सैः निर्वृतिं सुखमाप । वत्सेषु वात्सल्यातिशयात्कण्डूयनेन तेषां सुखात्स्वयमपि सुखं प्रापेत्यर्थः ॥८४ ॥

**सिषेविर इति ॥** वत्साः मणिमेचकेन नीलमणिश्यामलेन कृष्णस्य धाम्ना त्विषा शाद्वलितान् शाद्वलीकृतान् शादेन नवतृणेन हरितीकृतान् केवलायां तृणरहितायामपि वसुन्धरायां वदनानि व्यापारयन्तस्सन्तः कृष्णधाम्नि तृणभ्रमादिति भावः । सिषेविरे सेवन्ते स्म ॥ ८५ ॥

**नवेति ॥** स कृष्णः नवं यथा तथा प्रसूताः अप्रतिमानदोहाः असदृशदोहाः बहुक्षीरा इति यावत् । पयस्विनीर्धेनूः वनान्ते परिभ्रमश्रान्तपदान् उल्लङ्घनेन श्रान्तचरणान् अदूरात् प्रत्यागतान् समीपएव परिक्रम्य ततो गृहं प्राप्तान् वत्सान् पाययते स्म दोहं प्रतिषिध्य वत्सानेव पाययामास ॥ ८६ ॥

निविश्य मूलेषु वनं द्रुमाणां निद्रायितानां निजतर्णकानाम् ।
अङ्गानि गास्सादरमालिहन्तीरमंस्त सम्भाव्यगुणाः स्वमातुः ॥
स नैजकीः प्रत्यहमातपान्ते प्रत्युक्तघोषा इव वत्सनादैः ।
मधूनि वंशस्वनिभिः प्रयच्छन्निनाय भूयोऽपि निवासभूमिम् ॥
समाव्रजन्विश्वपतिर्व्रजान्तं गोभिस्समं गोपविलासिनीनाम् ।
उल्लासहेतुस्स बभूव दूरादुद्यन् विवस्वानिव पद्मिनीनाम् ॥ ८९
निवर्तयन् गोकुलमात्तवंशो मन्दायमाने दिवसे मुकुन्दः ।
प्रियादृशां पारणया स्वकान्त्या बर्हावृतं व्यातनुतेव विश्वम् ॥

---

निविश्येति ॥ कृष्णो वनद्रुमाणां मूलेषु निविश्य प्रविश्य निद्रायितानां निद्राणानां निजतर्णकानां आत्मीयानां सद्यो जातवत्सानां अङ्गानि सादरं आलिहन्तीस्समन्तात्लिहन्तीः गाः स्वमातुर्यशोदाया अपि सम्भाव्यगुणाः तथापि श्लाघनीयवात्सल्यगुणाः अमंस्त मन्यते स्म ॥ ८७ ॥

स इति ॥ स कृष्णः प्रत्यहं प्रतिदिनं आतपान्ते सायंसमये वंशध्वनिभिर्वेणुनादैः मधूनि श्रोत्रपेयानि प्रयच्छन् सन् वत्सनादैः प्रत्युक्तघोषा इव स्वगृहसामीप्ये सति गृहबद्धान्वत्सानुद्दिश्य घोषे कृते तेषां शब्दैः प्रत्युत्तरितघोषा इव स्थिताः नैजकीरुत्तमगवीः 'उत्तमागोषु नैजकी' इत्यमरः । भूयोपि निवासभूमिं गोष्ठं प्राप ॥ ८८ ॥

समिति ॥ गोभिस्समं व्रजन्तं गोष्ठसमीपं दूरात् समाव्रजन् विश्वपतिः । कृष्णः दूरात् उद्यन् आविर्भवन्नेव विवस्वान् सूर्यः पद्मिनीनामिव गोपविलासिनीनां उल्लासहेतुः प्रबोधहेतुर्बभूव । सूर्यपक्षे गावः किरणाः उल्लासो विकासः व्रजान्तस्थाने तु प्राचीभागप्रतीतिरनुसर्तव्या ॥ ८९ ॥

नीति ॥ दिवसे मन्दीयमाने मन्दीभवति सति आत्तवंशो गृहीतवेणुवाद्यः गोकुलं निवर्तयन् मुकुन्दः प्रियादृशां गोपीलोचनानां पारणया तृप्तिकारिण्या स्वकान्त्या विश्वं बर्हावृतमिव व्यातनुत अकरोत् ॥ ९० ॥

बालं तरुण्यस्तरुणञ्च मालास्तमन्वरज्यन्त समानभावाः ।
तदद्भुतं विश्वविलोभनं वा तस्यैव सर्वार्हरसात्मता वा ॥ ९१

अवेदिषातां पृथुकौ पितृभ्यां तारुण्यपूर्णौ तरुणीजनेन ।
वृद्धौ पुरावृत्तविशेषविद्भिः क्लृप्तेन्द्रजालाविव रामकृष्णौ ॥ ९२

अथापदानां मदनस्य दातुमादातुमालोकयतां मनांसि ।
नवं वयो नाथसमं प्रपेदे गुणोत्तरं गोपकुमारिकाभिः ॥ ९३

---

बालमिति ॥ बालं तं कृष्णं तरुण्यः तरुणन्तं बालाश्च समानभावाः वयोवैषम्येपि समानवयस्का इव तुल्यभावास्सत्यः अन्वरज्यन्त रज्यन्ते स्म । अत्र वनितानां तं प्राप्य रक्तनापत्तिराख्यायत इति इत्थंभूताख्याने अनुशब्दः अतएव लक्षणेत्थंभूताख्यानेत्यादिना तस्य कर्मप्रवचीयसंज्ञतया तद्योगे द्वितीया । तस्य बाल्यदशायां तरुण्यः तारुण्यदशायां बालाश्च समानवयस्का इव तस्मिन्न रज्यन्ते-त्यर्थः । अद्भुतमन्यत्रैवमदर्शनादाश्चर्यं तत् अननुरूपवयसामपि स्त्रीणामनुरञ्जनं तस्य विलोभनं वा तत्तदनुरूपाकारप्रदर्शनादिना प्रलोभनं वा तस्यैव सर्वार्हरसा-त्मतावा सर्वार्हस्सर्वं तस्सर्वेषामास्वादनीयो रसः 'रसो वैस' इति श्रुतिसिद्धिः । निरतिशयानन्दः तद्रूपता वा इत्थमिति निर्धारयितुं न शक्यत इत्यर्थः । कार्यका-रणयोरभेदोपचारात्तद्विलोभनमित्यादि सामानाधिकरण्यम् ॥ ९१ ॥

अवेदिषातामिति ॥ रामकृष्णौ क्लृप्तेन्द्रजालौ ऐन्द्रजालिकाविव पितृ-भ्यां यशोदया नन्देन च पृथुकौ अर्भकौ अवेदिषातां अवगतौ । तरुणीजनेन तारुण्यपूर्णौ अवेदिषातां । पुरावृत्तविशेषविद्भिः भगवदवताराविमाविति विशेषं जानद्भिः पुराणपुरुषतया वृद्धौ अवेदिषाताम् । यथा एक ऐन्द्रजालिको नाना-रूपेण प्रतीयते तथा गृहीतबुध्यादिभेदेन बालादिरूपतया प्रतीतावित्यर्थः ॥ ९२ ॥

अथेति ॥ अथ कृष्णस्य यौवनप्रादुर्भावानन्तरं गोपकुमारिकाभिर्नन्द-व्रजजाताभिरप्सरोरूपाभिः मदनस्यापदानं पराक्रमं दातुं 'अपदानं पराक्रमः' इति वैजयन्ती । आलोकयतां मनांसि आदातुमपहर्तुञ्च गुणोत्तरं कान्तिसौन्दर्य-सौकुमार्यादिभूयिष्ठं नाथसमं कृष्णस्यानुरूपं नवं वयः प्रथमयौवनं प्रपेदे प्राप्तम् । कर्मणि लिट् ॥ ९३ ॥

अनङ्गसिन्धोरमृतप्रथिम्ना रसस्य दिव्येन रसायनेन ।
महीयसीं प्रीतिमवाप तासां योगी महान् यौवनसम्भवेन ॥९४

विजृम्भमाणस्तनकुड्मलानां व्यक्तोन्मिषद्विभ्रमसौरभाणाम् ।
मधुव्रतत्वं मधुराकृतीनां लेभे लतानामिव वल्लवीनाम् ॥ ९५

अतिप्रसङ्गादवधीरयन्त्या प्राचीनया संयमितो नियत्या ।
पाञ्चालकन्यामिव पञ्चभुक्तां धर्मस्सतीरादृत तादृशीस्ताः ॥९६

---

अनङ्गेति ॥ महान् योगी कृष्णः अनङ्गसिन्धोर्मदनसागरस्य अमृतप्रथिम्ना अमृतभूमरूपेण अमृतोत्सारभूतेनेत्यर्थः । रसस्य शृङ्गाराख्यस्य दिव्येन रसायनेन दिव्यरसायनवत्सद्यो रसोदयकरेणेत्यर्थः । तासां गोपकुमारिकाणां स्वार्थमवतीर्णानां यौवनसम्भवेन यौवनोदयेन महीयसीं महत्तरां प्रीतिं अवाप । महान्योगी गोपिकासम्भोगमिच्छतीति विरोधः । प्राचीनतदीयतपःफलप्रदानार्थत्वेन तत्समाधानञ्च ॥ ९४ ॥

वीति ॥ स कृष्णः विजृम्भमाणौ स्तनौ कुड्मले इव यासां । लतापक्षे स्तनसदृशानि कुड्मलानि यासामिति समासः । व्यक्तं स्फुटं उन्मिषद्विकसत् विभ्रमस्सौरभमिव यासां । पक्षे पूर्ववन्मध्यमपदलोपिसमासः । मधुराकृतीनां मनोज्ञरूपाणां वल्लवीनां लतानामिव मधुव्रतत्वं लेभे प्रपेदे । मधुकरो वल्लरीरिव वल्लवीरुपभोक्तुं प्रवृत्तइत्यर्थः ॥ ९५ ॥

अतीति ॥ तादृशीः कृष्णमभिसरन्तीः ताः । अतिप्रसङ्गात् प्रवृत्तिर्जातेति अन्यत्रापि प्रसङ्गः अतिप्रसङ्गस्तस्मात् अवधीरयन्त्या क्षिपन्त्या प्राचीनया नियत्या प्राग्भवीयेन निजतपोरूपेण कर्मणा संयमितो नियमितः धर्मः पञ्चभिः पाण्डवैर्भुक्तां पाञ्चालकन्यां द्रौपदीमिव सतीः पतिव्रता इति आदृत आद्रियते स्म । प्राग्भवीयकर्मबलात्कृष्णस्य स्वस्वपतिरूपानेकभोगेऽपि तासां धर्मपथभ्रंशो नासीदित्यर्थः ॥ ९६ ॥

दिशागजानामिव शाक्कराणां शृङ्गाग्रनिर्भिण्णशिलोच्चयानाम् ।
सतादृशा बाहुबलेन कण्ठान्निपीड्य लेभे पणितेन नीळाम् ॥

करेण दम्भोळकठोरतुङ्गान् देहान् पृथून् दानवदुर्वृषाणाम् ।
विमृद्य नूनं विदधे मुकुन्दः प्रियास्तनस्पर्शविहारयोग्यान् ॥ १८

आत्मीयपर्यङ्कभुजङ्गकल्पावक्षेप्यरक्षापरिघौ पृथिव्याः ।
नीळोपधानीकरणात्स मेने भूयिष्ठधन्यौ भुजपारिजातौ ॥ १९

---

दिशेति ॥ सः कृष्णः दिशागजानां दिग्गजानामिव शृङ्गाग्रनिर्भिण्णशिलोच्चयानां विषाणाग्रविदलितपर्वतानां शाक्कराणां वृषभाणां कण्ठान् तादृशा तथाभूतेन असुरमर्दनादिषु प्रसिद्धेन बाहुबलेन निपीड्य कण्ठनिपीडनेन तान्मारयित्वेति यावत् । पणितेन वृषभमर्दनरूपेण शुल्केन नीळां नाम कन्यां लेभे । एवं हरिवंशे कथा—विदेहनगरे यशोदानुजः कुम्भको नाम गवांपतिरासीत् तस्य व्रजे कालनेमेरसुरस्य सुतास्सप्त प्राग्भगवता निर्जिताः पूर्ववैरमनुस्मृत्य कृष्णापचिकीर्षया वृषभरूपेण न्यवसन् तैश्च गोकुलवित्रासनसस्यभक्षणाद्युपद्रवेषु क्रियमाणेषु स्वयन्दमयितुमशक्येषु य एषान्दमयिता तस्मै स्वकन्यां नीळां दास्यामीति कुम्भकः प्रतिजज्ञे तत्र च कदाचित्कृष्णस्समागत्य तान्मारयित्वा नीळामुद्वाहेति ॥ १७ ॥

करेणेति ॥ मुकुन्दः दानवदुर्वृषाणां असुररूपाणां दुष्टवृषभाणां दम्भोलकठोरतुङ्गान् वज्रकठिनान् उन्नतांश्च पृथून् देहान् करेण प्रमृद्य नूनं प्रियायाः नीळायाः स्तनस्पर्शविहाराय योग्यानभ्यासं विदधे चकार । 'योग्याभ्यासार्कयोषितोः' इति विश्वः । कठिनानां वृषवपुषां विमर्दनमतिकठिननीळाकुचस्पर्शसहनाय प्रथमाभ्यास इवाभूदित्युत्प्रेक्षा ॥ १८ ॥

आत्मीयेति ॥ स कृष्णः आत्मीयपर्यङ्कभुजङ्गकल्पौ स्वकीयमञ्चभुजङ्गशेषस्य सदृशौ पृथिव्याः अक्षेप्यरक्षापरिघौ अप्रतिक्षेप्यरक्षार्थार्गलरूपौ भुजपारिजातौ पारिजाताविव भुजौ नीळाया आश्लेषसमये उपधानीकरणात् भूयिष्ठधन्यौ भृशं कृतार्थौ मेने इति तस्यां प्रेमातिशयोक्तिः ॥ १९ ॥

रागादिरोगप्रतिकारभूतं रसायनं सर्वदशानुभाव्यम् ।
आसीदनुध्येयतमं मुनीनां दिव्यस्य पुंसो दयितोपभोगः ॥१००
अनुद्रुता नूनमनङ्गबाणैस्सुलोचनालोचनभागधेयम् ।
प्रत्यग्रहीषुः प्रतिसन्निवृत्तं त्यक्तेतरैरक्षिभिरात्मना च ॥ १०१

रागेति ॥ दिव्यस्य दिवि परमपदे भवस्य पुंसः कृष्णस्य दयितोपभोग एव गोपिकासम्भोगएव सर्वदशानुभाव्यं न तु प्रसिद्धरसायनवत् समयविशेषं प्रतीक्ष्य सेव्यं रागादिरोगाणां प्रतिकारभूतं भेषजत्वं प्राप्तं रसायनं दिव्यौषधं मुनीनामृषीणामप्यनुध्येयतममतिशयेनानुध्येयमासीत् । अत्र दयितोपभोगे प्रसिद्धरसायनवैलक्षण्यविशिष्टरसायनत्वारोपरूपो रूपकभेदः स च विरोधाभासगर्भः । लोकेह्युपभोगो भाव्यमानो भावकस्योद्दीपनविभावतया रागादिकमुत्पादयति अयन्तु भाव्यमानो रागादिकं क्षपयतीति विरोधस्य भगवच्चरितानुध्यानरूपतया तत्समाधानस्य च सत्त्वात् । रागादिरोगप्रतिकारभूतमिति विशेषणेन । 'भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत्' इति भागवतोक्तरीत्या भगवतो गोपिकासम्भोगस्य लोकानुग्रहार्थत्वमपि दर्शितम् । रागिणो हि सम्भोगवदश्रवणे स्वयमेव कुतूहलिनः प्रवर्तन्ते तच्च श्रवणं भगवत इव विषयमाहात्म्यादन्तःकरणशुद्धिमादाय रागादिकं क्षपयति । अतएव विषयमाहात्म्यान्मुक्तिजनकतया मुनीनामप्यनुध्येयता ॥ १०० ॥

अन्विति ॥ सुलोचनाः गोपसुदृशः प्रतिसन्निवृत्तं नीळां लब्ध्वा विदेहदेशात्प्रतिनिवृत्तं लोचनानां भागधेयं भाग्यभूतं तं कृष्णं नूनं अनङ्गबाणैः अनुद्रुताः अनुसृतास्सत्यः त्यक्तेतरैः विसृष्टविषयान्तरैः अक्षिभिः आत्मना मनसा च त्यक्तेतरेणेति वचनविपरिणामेन विशेषणानुषङ्गः । प्रत्यग्रहीषुः प्रत्युद्गमनेनाङ्गीचक्रुः यथा देशान्तरात्प्रतिनिवृत्तं बन्धुं तदीयाः स्वकीयैः कैश्चिदनुगन्तृभिस्सम्भूताः प्रत्युद्गच्छन्ति एवं कृष्णं लोचनैः प्रत्युद्गच्छन्त्योऽङ्गनाः मदनबाणैरनुद्रुताः प्रत्युज्जग्मुरिति मदनबाणानामपि तदनुगामितया प्रत्युद्गन्तृत्वमुत्प्रेक्ष्यते । तत्र च निमित्तं मदनबाणप्रेरितानां तासां लोचनान्तप्रत्युत्पतनानन्तरं कृष्णस्यापि मदनबाणविद्धतेति भावः । यद्वा यथा कैश्चिद्बाधकैरनुद्रुता बाधपरिहाराय जवात् गत्वा कञ्चन समर्थं शरणं गृह्णन्ति एवं तद्विश्लेषसमये मदनबाणैर्बाधकैरनुद्रुता-

